सजातीयशून्यो देवदत्ताद्यर्थ इति तत् कष्टसृष्टं, काचिद्व्यक्तिषु [कासुचिद्व्यक्तिषु] वैचित्राद्यर्थप्रवृत्तौ [चैत्राद्यर्थप्रवृत्तौ] चैत्राद्यर्थ एवोपाधिरिति सङ्गतिः। डित्थादिशब्दानामन्त्यबुद्धोत्याद्युत्तरग्रन्थविरुद्धञ्च।

पदार्थस्य पदोद्देश्यधर्मिणः, प्राणनं प्राणो हानोपादानयोग्यताविशेषः सजातीयाद्व्यावर्तनम्।

जातेः प्राणप्रदत्वे प्रामाणिकसम्मतिमाह **उक्तं होति।** [1]**भर्तृहरिणेति** शेषः।

स्वरूपेण जातिरूपोपाधिमन्तरेण, न गौः न गोव्याहारव्यवहारविषयः। नागौः नाश्वादिव्यवहारगोचरः।

लब्धसत्ताकं जातिविशेषोपग्रहाल्लब्धव्यवहारयोग्यताकं शुक्लादिना गुणेन विशिष्यते विशिष्टव्यवहारपात्रं क्रियते।

पूर्वापरीभूताः कार्यकारणरूपतया सन्तानीभूताः। अवयवाः निष्पादकान्यङ्गानीन्धनानयनादीनि। यस्याः पाकादिप्रधानक्रियायाः तत्स्वरूपो वस्तुधर्मसाध्यपदवाच्यः।

तस्य क्रियमाणतया निर्दिश्यत्वात्। **अन्त्येति।** अन्ते भवा अन्त्या उच्चरणानन्तरमुत्पन्ना एकैकधीः, तथा विषयीकृतं गवादिपदवदिहोपाधिप्रत्ययानन्तरमुपाधेयप्रत्ययो नास्तीत्यर्थः। डित्थादिशब्दानां स्वरूपं डित्थादिशब्दा एव। एषां चान्त्यबुद्धिनिर्ग्राह्यत्वमेव विशदयति **संभूतक्रमेति। [संहृतक्रमेति]।** क्रमणं क्रम उपाधिविग्रह पूर्वमुपाधेयग्रहणं, तदत्र संहृतं अस्थितं उपाधित्वेन, शब्दव्यहारनिर्वाहकत्वेन डित्थादिशब्द एव यदृच्छात्मः इत्यादिरूपेण चतुष्टयी चतुःप्रकारा जातिगुणक्रियायदृच्छाकल्पिकत्वात्। सुलक्षणरूपा। प्रवर्ततेऽनयेति प्रवृत्तिः प्रवृत्तिनिमित्तम्।

एवञ्च शब्दानां प्रवृत्तेर्जात्यादिचतुर्विधोपाधिनिमित्ततांगीकारे परमा [परमाण्वादि] एवादिशब्दानां प्रवृत्तौ किं निमित्तमत आह **परमाण्वादीनान्त्विति भाव-**परोऽयं निर्देशः। **गुणमध्यपाठादिति।**

[2]परिमाणस्य हि गुणमध्ये पठनं, तेन तत् प्रभेदानां परमाण्वणुपरममहत्वादीनां जातित्वाद्युपगमे पृथिवीत्वादिना जातिसंकरापत्तेः। तथाहि पृथिवीत्वं जलपरमाणादि परिहारेण घटादौ, जलपरमाणत्वं च घटादिपरिहारेण जलपरमाण्वादौ वर्तते, तदुभयस्य च एकत्र पार्थिवपरमाण्वादौ समावेशादिति भावः।

---

१. वाक्यपदीये।

२. रूपरसगन्धस्पर्शसंख्यापरिमाण etc. (तर्कसंग्रहः)

गुणादीनाञ्चैककस्य प्रतिव्यक्तिभेददर्शने दृश्यानन्तर [दृश्यानन्त्य] व्यभिचार-दोषाशङ्का न कार्येत्याह **गुणेति**। यदृच्छाविषयो डित्थादिरर्थ एवात्र यदृच्छा आश्रयाः, कुन्दकुमुदकौमुद्यादयः क्षीरकनकादयश्च प्रतिपदादितिथिविशेषादिलब्ध-न्यूनाधिकभावकलादिकलितचन्द्राद्यवयवाश्च तेषां भेदात् भेद इवेति। इह शुक्लःशुक्ल इत्याद्यनुगतव्याहारव्यवहारान्यथानुपपत्तिकः स एवायं शुक्ल इत्यादि।

प्रत्यभिज्ञानिमित्तकश्च शवलं········वलेपादिषु गोत्वादि सामान्यवत् गुणादीनां भेदोल्लेखि प्रमाणबाधः तेनाश्रयोपाधिकतया गुणादितो न तात्विक इति भावः। **आलम्बनं प्रतिबिम्बाश्रयः**।

जातिरेवेति पक्षं व्याकरोति **हिमेति**। परमार्थतो भिन्नेषु तारतम्यदर्शनात्। सामान्यवन्नैकैकरूपेषु अभिन्नमेकाक [त्वेना] भिधानं शब्दप्रयोगः। प्रत्ययो ज्ञानञ्च तयोरुत्पत्तिः शुक्लत्वादिसामान्यं शुक्लादिगुणेषु शुक्लादिपदप्रवृत्तिनिमित्तम्। एवञ्च शुक्लादिगुण [प्रयोगोऽ] पि भाक्तः। शुक्लादिपदप्रयोग इति भावः। **गुडतण्डुलपाका-दीति**। एवमेव शुक्लादिगुणवत्सु शुक्लादिसामान्यवदेव रूपादिपरा द्वित्रिरूपस्य··· डादिपाकस्य पूर्वं द्रव्यादिनाशात्पूर्वं द्रव्यान्तरोत्पत्तिरूपस्य तण्डुलादिपाकस्याभिन्ना-भिधानप्रत्ययोत्पत्तौ पाकत्वादि सामान्यमेव निमित्तमिति भावः।

बालेत्यादि डित्थादिशब्देषु स्वरादिभेदादभिन्नेषु प्रतिक्षणमिति। एकस्मिन् क्षणे कृशतयोपलभ्यमानडित्थस्य तदितरक्षणे स्थूलतयोपलभ्यमानत्वात्।

ये क्षणे क्षणेऽन्यभावोत्पत्तिमंगीकुर्वते तन्मतेन भिद्यमानेन बालस्थविरादिरूपेण डित्थाद्यर्थेऽभिन्नाभिधानप्रत्ययोत्पत्तौ डित्थादित्वसामान्यमेव निमित्तमिति भावः।

अत्र शब्देष्वित्यनन्तरं चकारः, डित्थाद्यर्थ इत्यनन्तरं पूर्वोक्तसमुच्चयार्थः। यद्यपि द्रव्यरूपो डित्थाद्यर्थ एक [त्र] शुक्लादिपाकादिकयोर्गुणक्रिययोः समकक्षतया निर्दिष्टुमुचितस्तथापि तद्वाचकशब्दोऽपि जातियुक्त इति प्रसङ्गात् कथनम्।

यत्तु[1] **केचिच्चण्डिदासप्रभृतयः** शब्देष्वित्यनन्तरं पूर्वोक्तसमुच्चयश्चकारो डित्याद्यर्थ इत्यनन्तरं।

एतदनन्तरञ्चयौपम्यार्थो वाशब्दः शब्देष्वित्यनन्तरं पठनीयः, ततश्च शब्देष्वि-त्यनन्तरं वाक्यमौपम्यार्थं कल्पयति तत्कष्टतरम्।

---

१. दीपिका (चण्डिदासकृता) (पृ० ३८) reads बालवृद्धेत्यादि वृत्तौ चका-रवाकारौ पूर्वोक्तसमुच्चयौपम्यार्थौ व्यत्ययेन योजनीयौ।

**तद्वानिति**। तदस्यास्तीति तद्वान्, तच्छब्देन च जातिरित्युच्यते, [१]आकृति-जातिर्वा। तेन जातिरेव पदार्थो व्यक्त्याकृतिर्जातयः पदार्थ इति दर्शनद्वयमुपन्यस्तं भवति।

तत्र जातिमात्रे सङ्केतितस्यानुपयोगो जातेरनुक्रियाकारित्वाभावात् व्यक्तिमात्रे त्वानन्त्यव्यभिचारदोषापात इति जातिस्तत्रोपलक्षणमिति **प्रथमः पक्षः**

**द्वितीयपक्षे क्वचत्तु** गौः पदा न स द्रष्टव्या इत्यादौ जातेः प्राधान्यं व्यक्ते-रङ्गभावः। सर्वगोषु प्रतिषेधावगमात्।

क्वचिद्गां बधानेत्यादौ व्यक्तेः प्राधान्यं, तत्र जातेरनुपयोगादङ्गभावः।

क्वचित् पिष्टमध्यो गावः क्रियन्तामित्यादौ त्वाकृतेः प्राधान्यं व्यक्तेरङ्गभावः, जातिस्तु नास्त्येव। सन्निवेशचिकीर्षामात्रेण गोशब्दे प्रयोगादिति। **अपोहो वेति**। क्षणभङ्गनये हि स्थिरस्य सामान्यस्याभावादितरव्यावृत्तिरेव समयग्रहविशेषः। **गौरवं** विस्तरः। न दर्शितं युक्तियुक्त्या वाचा न प्रकाशितं, लोकप्रसिद्धेनैव व्यवहारेण प्रकृतस्य काव्याङ्गनिरूपणस्य निर्वाहादित्याशयः।

**स इति**। मुख्यनाम्ना अभिधानाम्ना व्यापारोऽयमुच्यत इत्यन्वयः।

## लक्षणानिरूपणम्

संप्रति लाक्षणिके निरूपयितव्येऽनर्थसंहितोपाधेरुपहितप्रत्ययायोगात् प्रथमं तदुपाधिभूतां लक्षणां निरूपयति-**मुख्येति**। बाधः पदार्थान्वियानुपपत्तिलक्षणः, न च यतः कुतश्चिद्यदेव तदेव लक्ष्यतेऽतिप्रसङ्गादित्यत आह **तद्योग इति**। तेन मुख्यार्थेन लक्षणार्थस्य सम्बन्धे रूढ़ितोऽनादिवृद्धव्यवहारपरम्पराप्रसिद्धेः। अथ विकल्पे प्रयोजनात् प्रयोजनमुद्दिश्य। यदिति ययेत्यर्थेऽव्ययम्। आरोपिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा, क्रिया शक्तिः। कर्मणीत्यादि लक्षणायाः प्रयोजकं हेतुत्रयं मुख्यार्थबाधः। तत्सम्बन्धि क्वचिद्रूढ़िः, क्वचित्प्रयोजनञ्चेति। तेन कर्णणि कुशल इत्यादौ कुशलशब्देन दर्भग्रहणाद्ययोगान्मुख्यार्थबाधः। विवेचकत्वाख्यसादृश्यं सम्बन्धः, प्रयोजनाभावाद्रूढ़िश्चेति हेतुत्रयम्। गङ्गायां घोष इत्यादौ जलमपादे [जलमयादि] घोषाद्यधिकरणत्वासंभवात् मुख्यार्थबाधः। सामीप्यादिसंबन्धः। घोषादेः शीतत्वपावनत्वादतिशयबोधनम् प्रयोजनमिति **हेतुत्रयपिण्डार्थः**।

---

१. आकृतिग्रहणा जातिः। (सि० कौ० स्त्रीप्रत्ययप्रकरणम्) जात्याकृतिव्यक्तयः पदार्थाः।

इह कुशलशब्दे दक्षरूपस्यैव मुख्यार्थत्वात् मुख्यार्थबाधाभावाच्च लक्षणात कुशग्राहिकरूपस्य व्युत्पत्तिलभ्यत्वेऽपि मुख्यार्थत्वाभावात् अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेत" इत्यत्रापि गमधातोर्डो प्रत्ययेन[1] व्युत्पादितस्य गोशब्दस्यापि लाक्षणिकप्रसङ्ग **इत्यन्ये**[2] तेनात्र कलिङ्गः साहसिक इति रूढावुदाहार्यम् ।

इह कलिङ्गशब्दो देशविशेषवाचकत्वात् मुख्यार्थबाधादाधार्याधारभावसम्बन्धाच्च कलिङ्गदेशस्थं पुरुषं लक्षयति ।

**तथा प्रतिपादनात्मन इति ।** गङ्गातटे घोष इति आदिशब्दप्रतिपादनाद्यर्थे प्रतिपादनस्वरूपत्वात् शीतत्वपावनत्वातिशयादेः प्रयोजनात्-सान्तरो मुख्यान्तरितस्तटादिस्तन्निष्ठस्तद्विषयः ।

## लक्षणाभेदाः

एवं सामान्यत उक्तं लक्षणाद्वयं विभजते **स्वेति ।** स्वस्यात्मीयस्य वाक्यार्थेऽन्वयस्य सिद्धये निर्वाहाय । परस्य प्रकृतनिर्वाहोपयुक्तस्य यदाक्षेप आकृष्योपनयनं तद्वाक्यार्थान्वये मुख्यार्थस्यात्मनोऽप्युपादानादुपादानम् ।

इह चाभिधेयापि [अभिधेयाविना] बोधितस्य कुन्ताद्यर्थस्य स्वातन्त्र्येण सिद्धस्यान्वयस्य निर्वाहाय पुरुषादेर्विशेषणतया पुनर्लक्षणीयत्वम् ।

यच्च परोऽन्वयारान्तरादिः [अन्वयार्थान्तरादिः] तत्प्रतिपद्यर्थं गङ्गादेः स्वस्यात्मनः समर्पणम् । तत्सम्बन्धिमात्रस्योपलक्षणात् लक्षणम् ।

चः पूर्वोक्तसमुच्चये । **इतीति ।** यस्मादिदमुपाधिद्वयं ततो हेतोः सा पूर्वोक्ता रूढिप्रयोजनोपाधिलक्षणा शुद्धैव, प्रत्येकं द्विधा । गौण्यन्तर्भावे पुनर्भेदान्तरमप्यस्तीति भावः ।

**सेति ।** पूर्वोक्ता रूढ़िलक्षणा प्रयोजनलक्षणा च ।

इह च गवादिपदेषु जात्यभेदसङ्केतत्वाभिहितायां त········दुपहितासु व्यक्तिषु लक्षणया बोधितासु तात्पर्यापरनाम्ना द्वितीयलक्षणयान्वयो बोध्यत इति **अभिहिता-**

---

१. गमेर्डोः (उणादि २/२७) ।

२. अन्ये (अस्मदादय इत्यर्थः) cf. टीका of साहित्यदर्पण पृ० ३६) ।

**न्वयवादिनां मतं** कटाक्षयति-**गौरिति**। गौरित्यादि श्रुत्या गोशब्दसामानाधिकरण्य-श्रवणे न वेदाख्यया [ ? ] वा विहितम्। मम गोशब्दाभिहिताया जातेरनु बन्धन……प्रतीतिबोधनमनुपपन्नमिति जातिव्यक्तिरूपं स्वलक्षणमाक्षिपति अचेतनायामपि जातौ ग्रन्थकृद्वैदग्ध्योक्त्या चेतनव्यवहारमारोपितवान्। **उच्यते** अभिधया बोध्यत इत्यर्थः।

**विशेष्यमित्यादि**। विशेष्यं व्यवच्छेद्यं विशेषणे व्यवच्छेदके, क्षीणशक्तिर्विश्रान्त-रूपा-शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति भावः।

**नह्यत्रेति**। जातिव्यक्तिपदार्थौदासीन्येन हि लोकमाश्रित्य रूढ़िप्रयोजनयोश्चिन्ता। एवञ्चार्थप्रतिपत्यादि फलस्यादि फलस्यानादिप्रयोगस्य सद्भावेऽपि न लक्षणेति भावः।

तर्हि कथं व्यक्तिप्रतीतिर्विद्यत [भिद्यत] इत्याह **व्यक्तीति**। कर्ता संमुखीनः, कर्म कटादिः। अथ न केवलमविनाभावाद्व्यक्तेराक्षेपो न्याय्यः। किन्तु प्रस्तुतान्वययोग्यतयापि इति बोधयितुं योग्यविशेषाक्षेपे निदर्शनमाह **प्रविशेति**। प्रकरण-वशात् गृहमाक्षिपति **पिण्डीमिति च**। भक्षयेति क्रिया एतच्च गृहीतसङ्केततया जात्यविनाभावादाक्षिप्तासु व्यक्तिषु द्वितीयलक्षणया **संसर्गबोधनमङ्गीकुर्वतां मतानुसारेण ग्रन्थकारेणोक्तं** तद्गतस्त्वविनाभावस्यानुसन्धानमन्तरेण नाक्षेपकत्वम्। यथा धूमादिगतस्य वह्न्यादेः।

इह च जात्या व्यक्तेराक्षेपेऽविनाभावानुसंधानस्यानुपलक्षिबाधिततया जातिमात्रेणाक्षेपोऽङ्गीकार्य्यः। अत्र च न लक्षणा पूर्वोक्तादेव न्यायात्।

**न च** तात्पर्यस्य संसर्गमात्रबोधननैयत्यात्, तेनात्रान्वययोग्याया व्यक्तेः शब्द-बोधितत्वम् विना शाब्देऽन्वये प्रवेशासंभव इति जात्यभिधायके शब्दे वृत्यन्तरमेवाङ्गीकार्यमिति **अभियुक्तानां मतम्**। किञ्च संसर्गापगमार्थमुपात्तानि पदानि संसर्गस्य मुख्याङ्गसंसृज्यमानं व्यक्तिरूपं साक्षान्न बोधयन्ति। बहिरंगन्तु, तदुपाधिभूतं सामान्यमेव बोधयन्तीत्यसङ्गतम्।

**येत्वाहुः**-व्यक्तिसध्रीचीनायामेव जातौ सङ्केत इति। तैरपि प्रकृतस्वलक्षणस्यासङ्केतितत्वात्, सङ्केतितस्यचेदानीमभावात् प्रकृतसंसर्गयोग्यव्यक्तिप्रतीतौ शक्यनन्तर [शक्त्यन्तर] मवश्यमभ्युपेयम् सामान्यस्य सर्वविशेषगर्भाकारात्। तत्संख्ये तेन सर्वविशेषज्ञाने तु सर्वस्यापि सर्वज्ञतापत्तिः। प्रथमोपदेशकाले सर्वव्यक्तीनां समुग्धाकारतया सामान्यालिङ्गततया प्रतीत्यङ्गीकारे पुनराधुनिकस्यापि स्वलक्षणस्य

प्रथमोपदेशकालवत् समुग्धाकारेणैव प्रतीतिः स्यात् । ततश्चान्वयोपपत्तिप्रतिपादि-काया: साक्षात्प्रतीते: पदस्य शंक्चनन्तरं [शक्त्यन्तरं] विना किं बीजमित्यलं बहुना ।

**पीनेत्यादि** । दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इति तदर्थकल्पनमर्थापत्ति-रित्येत [रित्यन्तेन] **भाट्टा** विवृणुते । **दृष्ट इति** । प्रत्यक्षानुमानोपमानार्थापत्य-भावलक्षणैः पञ्चभिः प्रमाणैरुपलब्धशब्दस्य प्राधान्यख्यापनार्थं भेदेन निर्दिशति **श्रुत इति**। शब्दलक्षणेन ज्ञातोऽर्थो वस्तुविशेषः अन्यथा नोपपद्यत इति, [१]शाब्दीह्याकाङ्क्षा शब्देनैव पूर्यत इति दर्शनात्, रात्रौ भुंक्त इति वाक्यशेषः कल्प्यते ।

**प्राभाकरगुरुस्त्वाह-दृष्टःश्रुतो वेति** । लौकिकीयमनास्थोक्तिः । ततो लोकप्रसिद्धा उपलब्धिमात्रे वर्तते, न तु विकल्पप्रतिपादन इति । शब्देऽपि हि कल्पितेऽर्थप्रतीत्या एव प्रकृतसमाधानम् । तद्वरमर्थ एव कल्प्यतामिति । तेन **भाट्टमते** श्रुतार्थापत्तौ रात्रौ भुंक्त इति शब्दः कल्प्यते । **गुरुमते**ऽर्थापत्तौ रात्रिभोजनमर्थः । एवेत्युभयनयेपि पीन इत्यादौ रात्रिभोजनस्य वाक्यार्थप्रतीत्यन्तरबोधितस्य अर्थापत्तेरेव विषयत्वम् । न त्वन्वयबाधजीविताया लक्षणाया अवकाश इति मीमांसाद्वयबलाबलजिज्ञासायामन-स्थोक्तं [मनन्तरोक्तं] **श्रुतार्थापत्तेरर्थापत्तेर्वेति** ।

लक्षणलक्षणामुदाहरति **गंगायामित्यादि** । स्वार्थमभिधेयम् । जलमयसूयं [जलमयरूपम्] ।

शुद्धत्वे हेतुमाह **उपचारेणेति** । अत्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमुपचारः । स च गौर्वाहीक इत्यादि । अर्थोकियो [अर्थक्रिययो] रुदाहरणयोरस्तीत्यर्थः । तदेतदाह-अनयोः शुद्धभेदयोः लक्ष्यस्य, तटादेर्लक्षकस्य जल-मयादेर्न भेदसदृशं, ताटस्थ्यमौदासीन्यम् । यथा-गौर्वाहीकयोः, किन्तु सामीप्यात् कतिपयस्य गुणस्य ग्रहणयोग्यतासद्भावाद्भेदाभेदौदासीन्यमिति भावः । तत्वं गङ्गा-दित्वं, प्रयोजनं शीतत्वादिः, को भेदः को विशेषः ?

इह गङ्गातटयोस्तादात्म्यप्रतीत्या तटे शीतत्वाद्यतिशयः गौर्वाहीक इत्यत्र च गोर्वाहीकयोस्तादात्म्यप्रतीत्या वाहीके जात्याद्यतिशयः प्रतीयते इति व्यर्थोऽयमुपचारेतरलक्षणाप्रयासोऽयं इति **ग्रन्थकारस्य** इति [२]**चण्डिदा-सपण्डितानाम**विचारिताभिधानम् ।

---

१. मीमांसान्यायप्रकाशः

२. दीपिकां reads is this ननु गौर्वाहीक इत्यादावपि वाहीकादेर्गो-तादर्थ्या-दिरेवाविवेकित्वाद्यतिशयप्रतीतिफलोपासनीया, गवादिभेदराहित्यमात्रप्रतीतौ हि गोगतधर्मादिसदृश धर्माधिकरणत्वमात्रप्रतीतिफलायां 'गो सदशो वाहीक' इत्यादि-

तथाहि-सादृश्यसंबन्धिनो विवेचरससंबन्धिनोर्न सर्वथौदासीन्येन वृत्तिः। किन्तु सामानाधिकरण्यप्रयोगात्तस्याः स्थगनमात्रम्। तदुक्तं [२]शारीरिकमीमांसाभाष्यव्याख्याने **वाचस्पतिमिश्रैः**। "अपि च परशब्दः परत्र दृश्यमानगुणयोगेन वर्तत इति यत्र प्रयोक्तुः प्रतिपत्तेः संप्रतिपत्तिः"। इति।

स गौणः स च भेदप्रत्ययपुरः सर इत्यनयोर्भेदयोरित्यादिना ग्रन्थेन **ग्रन्थकारोक्ते गौणशुद्धविभागे** न काचिदनुपपत्तिः। किन्तु गुणसंबन्धस्यापि संबन्धानन्यत्वात् मुख्यार्थबाधादिहेतुकायां लक्षणायामन्तर्भावो **ग्रन्थकारस्याभिमतः**।

भेदरूपं न ताटस्थ्यमिति वचनेन **भट्टमुकुलमतं** च दूषितम्।

एवं चतुः प्रकाराया लक्षणाया आरोपाध्यवसानाभ्यामुपाधिभ्यामष्टप्रकारत्वं [अष्ट ?] दर्शयन्नाह **सारोपेति**। अन्या तु एका पुनः सारोपा नाम।

लक्षणास्वरूपमाह **यत्रेति विषयी**त्यस्यार्थ आरोप्यमाणो गवादिः। **विषय** इत्यस्यार्थ आरोपविषयो वाहीकादि। उक्ताविस्यस्यार्थोऽनपह्नुतभेदौ शाब्दाविति यावत्। एतदेव विशदयति **सामानाधिकरण्येनेत्यादि**।

तथेति चार्थे। एवञ्च विषयविषयिणोः सामानाधिकरण्यनिर्देशादेवात्र मुख्यार्थ-बाधः आरोपो नामा निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिः।

तत् कर्ता सारोपेऽन्वर्थनाम्नापि गतार्थत्वेऽपि स्फुटीकरणार्थमेव लक्षणानिर्देशः **विषयीति**। आरोप्यमाणेन गवादिना निगीर्णेऽध्यवसिते आरोपविषये वाहीकादौ, विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसानं, तत्कर्त्री साध्यवसानिका। अत्रापि-लक्षणानिर्देशः पूर्ववत्।

**भेदावित्यादि**। इमौ प्रक्रान्तौ, सम्बन्धान्तरं सादृश्यादन्यत् कार्यकारणादि। सादृश्याद्गौणौ सम्बन्धान्तरतश्च शुद्धाविति यथासंख्यं सम्बन्धः। एवञ्च पूर्वोक्ताना-मष्टानां भेदानां प्रत्येकं द्वैविध्येन लक्षणायाः षोडशभेदाः।

---

प्रयोगनिर्विशेषत्वं, न चैतत् भेदः प्रत्ययस्थगनादेव तद्धर्मातिशयप्रत्यय इति न्याय्यं, न चैवंविधयुक्तिप्रसरनिषेधं प्रकृतेऽपि जागर्त्याज्ञाडिण्डिमारावः। तस्मादलीक एवैता-वानुपचारकत्वविवेचनाय प्रयास इति चेत् सत्यमेतत्-किन्तु प्राचीनप्रणयमनुरुन्धानेन ग्रन्थकृतेत्थमभिहितम्। (पृ० ४८)।

२. This reference, attributed to Vachaspati Misra is not found in the printed text of Bhamati.

आरोपाध्यावसानरूपौ भेदौ सादृश्यहेतू सन्तौ उदाहरतीत्यन्वयः। गौर्वाहीक इत्यत्र सारोपा गौणी, गौरयमित्यत्र साध्यवसाना गौणी। अत्र चायमिति वाहीकादि-विषयप्रयोगप्रकटनमिति **प्राच्या** व्याचक्षते तदसङ्गतम्। विषयप्रकटने सारोपा-पातात् तेनेदं शब्दस्य सजातीयव्यावर्तनपरं विषयभूतं वाहीकनिगरणेनोद्दिष्ट विषयि-रूपगवार्थत्वमेव **ग्रन्थकारमतमिति** सुसमञ्जसम्।

**अत्र हीति**। स्वार्थो गौर्लक्ष्यमाणा लक्षणाबोध्यमाना। अपिशब्दात्तेषां लक्ष-माणत्वमात्रेण विश्रान्तिर्नास्ति तदेतदाह अत्र **गोशब्दस्येति**। परोऽर्थो वाहीकः, तस्याभिधानेऽभिबोधने।

**केचिदिति**। तन्मते अरुचिं सूचयति। तथा हि। गोशब्दोऽगृहीतसङ्केतं वाहीकार्थं कथमभिधया बोधयेत्। गोशब्दार्थमात्रबोधनविरताया अभिधायाश्च कुतः पुनरुत्थानं शब्दबुद्धिकर्मणां विरम्य व्यापाराभाव इति न्यायात्। अभिधान्तरकल्पने तु कल्पना-गौरवम्।

**मतान्तरमाह स्वार्थेत्यादि**। गोशब्दस्य स्वार्थसहचारिणो गुणा जाड्यमान्द्यादय एव। तदभेदेन तैः सह साजात्येन सम्बन्धेन परोऽर्थो वाहीकादिः तद्गता गुणा एव न तु गुणी। अत्रैवकारस्य काकाक्षिन्यायेन लक्ष्यन्त इत्यत्रापि सम्बन्धः। तेन लक्ष्यन्त एव। न तु समनन्तरोक्तदर्शनवद्वाहीकार्थोऽभिधीयते।

एतदेव विशदयति **न त्विति**। अत्रैत एव प्रष्टव्यः। अत्र गोशब्दात् वाहीकार्थः प्रतीयते न वा? आद्येऽपि गोशब्दादेव वा लक्षिताद्गुणादविनभावाद्वा?

**न प्रथमः**, समनन्तरोक्तादेव न्यायात्।

**न द्वितीयः**। अविनाभावलभ्यस्यार्थस्य शाब्दींत्याकाङ्क्षादिनयेन शाब्दे नये प्रवेशासंभवात्।

[न[ द्वितीयः यदि हि गोशाब्दाद्वाहीकार्थो न प्रतीयते तदास्य वाहीकशब्द-सामान्याधिकरण्यमसमंजसं स्यात्। किञ्च वाहीकादिगुणानां गोशब्दस्यैवार्थेन संब-न्धाभावात् कथं लक्षणमित्यत्रापि दर्शनेऽपरितोषात्।

पक्षान्तरमाह **साधारणेत्यादि**। साधारणो गुणो जाड्यमान्द्यादिः तदाश्रयेण संबन्धेन लक्ष्यते लक्षणया विषयीक्रियते। न तु तद्गतगुणातिरेकोऽपि तस्य वृत्यन्तर-

गम्यत्वादिति भावः । एवकारेण तद्गत गुणरूपान्ययोगव्यवच्छेदः । **अपरे सांप्रदायिका** इति भावः । एतेन मुख्यार्थबाधेत्यादिलक्षणानुगमात् । गौणाख्याया वृत्तेर्लक्षणायामन्तर्भावः सूचितः ।

अत्र च प्रामाणिकसम्वादमाह **अभिधेयेति** । प्रतीयतेऽनयेति प्रतीतिः । जातिमात्रसङ्केतपक्षे लक्ष्यमाणस्याक्षिप्यमाणस्य गुणौ यद्वा लक्ष्यमाणैरभिधेयार्थविशेषणतया प्रतीयमानैर्गुणैर्योगात् । सम्बन्धात्सादृश्यादिति भावः ।

**अयमाशयः** । गौण्यामपि मुख्यार्थबाधसंबन्धरूढिप्रयोजनान्यतरार्थबोधस्तावदस्त्येव । किन्तु यद्यपि सम्बन्धानन्तरवत् [सम्बन्धान्तश्वत्] सादृश्यस्य सम्बन्धता साक्षान्न भवति । तथापि सम्बन्धस्य साक्षादसाध्यत्वेन वैचित्र्यमात्रं किञ्चदवान्तरवैधर्म्यमाधत्त इति लक्षणाविशेष एव गौणी ।

ननु यद्यविनाभावो लक्षणानिमित्तं तदोक्तलक्षणाभेदेषु का गतिरित्याह **अविनाभाव इति नान्तरीयकत्वम्** ।

तदन्वयव्यतिरेकार्थविधायत्वं उक्तं उपादानलक्षणानिरूपणावसरे ।

गौरनुबन्ध्यः इत्यादावित्यादिना शुद्धसारोपाध्यवसानयोरुदाहरति **आयुरिति एवमादाविति** आरोपाध्यवसाने कार्यकारणभावादिसंबन्धहेतुका लक्षणपूर्वा मूलम् । यत्र तत् कार्यकारणभावादिलक्ष्यसंबन्धो पूर्वं यथाभ्यां तथा भवत इति क्रियाविशेषणम् । लक्षणपूर्वमिति पाठे कार्यकारणसम्बन्धादिलक्षणं लक्षणा तत्पूर्वमित्यर्थः । **ताद्रूप्येति** । **सर्वथैवेति** । यथासंख्यं सम्बन्धः ।

गौणसारोपायां भेदेऽपि सर्वथैवाभेदावगमः प्रयोजनम् । अवान्तरमिति शेषः । जात्याद्यतिशयप्रतीतेरेव मुख्यप्रयोजनत्वात् । तेन पूर्वत्र गोनिष्ठं जाड्यं वाहीके वर्तत इति प्रत्ययः । परत्रास्यैव दृढतरमन्यूनानतिरिक्तत्वेन वाहीके वृत्तिरिति प्रत्ययः । अत एव पूर्वत्र रूपकालङ्कारः । द्वितीये च भेदेऽभेदरूपातिशयोक्तिः ।

**यत्पुनः केचिदाहुः** साध्यवसानिकायां विषयाप्रयोगाद्भेदस्य बुद्ध्यनारोहात् । वाहीके गोप्रत्यय एवेति तन्न, तथा सति भ्रान्तिमदलङ्कारवद्भ्रान्तिज्ञानापातात् । शुद्धसारोपायामन्यान्याक्षराणि [मन्यानिवैलक्षण्यानि] । तद्वैलक्षण्येन तदतिशयेन शुद्धसाध्यवसानिकायां विषयस्यानिर्देशेन तादात्म्यप्रतीतिदार्ढ्यादिव्यभिचारेण कार्यमासुरादि तत् करत्वम् [कार्यकारित्वादि] । इदञ्चात्र मुख्यं प्रयोजनं अवान्तरं तु पूर्ववदभेदावगमः ।

सम्प्रति विषयव्याप्तये संबन्धभेदमुदाहरति **क्वचिदित्यादि अग्रहस्त इति।** अत्राग्रश्चासौ हस्तश्चेति **समासे हि अग्रमात्रेऽवयवेऽवयविनो हस्तस्य** प्रयोगः। एकदेशदाहेऽपि ग्रामो दग्ध इति धहधयवे [दहनावयवे] समुदायोपचारात् अभक्षा [अतक्षा] ब्राह्मणादिः।

एषाञ्च षोडशानां लक्षणाभेदानां इहादर्शितान्युदाहरणानि **मम साहित्य-दर्पणेऽवगन्तव्यानि**[1]।

**षड्विधेति**। रूढिप्रयोजनोपादानलक्षणारोपाध्यवसानैः षड्भिरुपाधिभिर्द्विधा उक्ता। षोडशप्रकारा यस्याः सा षड्विधा, न तु षट्प्रकारा।

आद्यभेदाभेदाभ्यां प्रथमोक्तोपाधिभ्यां रूढिप्रयोजनाभ्यां सह यद्वा प्रथमं रूढि-प्रयोजनाभ्यां सामान्यत उक्तं लक्षणाद्वयं भिद्यते। **अद्याभेदाभ्यामिति**। भेदावुपा-दानलक्षण [लक्षित] लक्षणे। ताभ्यां सह इति **ग्रन्थसङ्गतिः।**

संप्रति एतावल्लक्षणाप्रपञ्चप्रयोजनरूपंव्यङ्ग्यद्वयमवतारयति **सा चेति।** सा लक्षणा।

**प्रयोजनं हीति**। वक्ष्यमाणरीत्येति शेषः।

**तच्चेति** गूढम्। सहृदयैकसंवेद्यम्।

अगूढं सहृदयासहृदयसाधारणं, आभ्यामेवोपाधिभ्यां ध्वनिगुणीभूतव्यङ्ग्यौ वक्ष्येते। वा शब्दः समुच्चये।

अत्र विकसितत्व-वशितत्व-समुच्छलितत्वापास्तसंस्थत्व मुकुलितोद्धुरत्व-मोदनैः प्रसरण-प्रश्लेषोल्लासविषय-सहस्रसंचरणोद्भेदयोग्यत्वविजृम्भणानि लक्ष्यन्ते, तेषा-मतिशयश्च सहृदयैकगम्यो विद्यते।

**उपदिशतीति**। आविष्कारो लक्ष्यते। तदतिशयश्चाभिधेयवत् असहृदैरपि स्फुटं प्रतीयते।

**त्रिधेति**। अव्यङ्ग्यत्वगूढागूढव्यङ्ग्यैस्त्रिभिरुपाधिभिस्त्रिधा। एतेन पूर्वोक्तानां षोडशानां भेदानां मध्ये रूढावष्टौ, प्रयोजने च येऽष्टौ भेदास्तेषां प्रयोजनरूपव्यङ्-ग्यस्य गूढागूढत्वेन षोडश भेदाः। किञ्च तस्यैव व्यङ्ग्यस्य धर्मिधर्मनिष्ठत्वेन प्रत्येकं द्वैविध्यात् द्वात्रिंशदिति पिण्डने [गणने] चत्वारिंशल्लक्षणाभेदाः।

---

१. द्र० साहित्यदर्पणः अ० २. ८-९ कारिका गतवृत्तिः।

अव्यङ्ग्या रूढ़िलक्षणा। एवमुपाधिरूपां लक्षणां लक्षयित्वा तदुपाधेयमाह **तद्भूरिति**। एवञ्च लक्षणार्थो लक्षितप्रायः।

## व्यञ्जनानिरूपणे तर्कप्रस्तावः

संप्रति व्यञ्जके शब्दे लक्षयितव्ये तदुपाधौ व्यञ्जनायां निरूपयितव्यायां स्पष्टप्रतिपत्तये प्रतिपदोक्तलक्षणामूलायामस्यां विप्रतिपत्तिं निराकरोति **तत्रेति**। तत्र प्रयोजनलक्षणावति काव्ये, समुपास्यते आद्रियते, एकशब्देनान्ययोगव्यवच्छेदः। लक्षणाशब्दो गङ्गादिः, तत्प्रतिपत्तिः प्रयोजनावबोधः।

**नाभिधेति**। तत्र शीतलत्वादिधर्मबोधने। अत्र च नापि तात्पर्यशक्तिः, तस्याः संसर्गमात्रबोधनपर्यवसानादिति पूरणीयम्। अन्यथात्वे चाभिधातात्पर्यलक्षणाभ्यां व्यापारान्तरेण गम्या इत्युपरितनोपसंहारग्रन्थस्याघटना स्यात्।

**हेत्विति**। मुख्यार्थबाधादीत्यादिशब्दात् मुख्यार्थसंबन्धः रूढ़िप्रयोजनयोरन्यतरच्च हेत्वभावमेव दर्शयति **लक्ष्यमिति**। लक्ष्यं तटम्। अत्र तटे बाधान्वयानुपपत्तिः, **फलं** पाव [न] त्वादि, तद्धि गङ्गादिगतमेव वास्तवं तत्तादात्म्यप्रत्ययबलादेव हि तटादिगतं प्रतीयते। **न प्रयोजनमिति**। पावनत्वादिप्रयोजनं हि यदि लक्ष्यं तत्र नास्त्येव रूढ़िः। प्रयोजनं पुनः किमनुभूयत इति भावः। **नचेति** गङ्गादिशब्दस्थलस्खलद्गतिरिति गङ्गादिशब्दोऽत्र स्खलद्गतिः सन् यमर्थं बोधयति तस्यैव तटादेर्लक्ष्यत्वम्, पावनत्वादौ तु स्रोतोऽविनाभावित्वात् प्रकारान्तरेण बोधयितुं शक्यनास्य [शक्यते अस्य] गतिः स्खलिता। अयमेवार्थो वृत्तिकृता व्याख्यातः **गङ्गाशब्दस्तटमिव प्रयोजनं पावनत्वादि प्रतिपादयितुमस (म) र्थ इति**। यदा तु प्रतिपादयितुं समर्थ इति वृत्तौ पाठस्तदा लक्षणयेति शेषः। तद्वत् स्रोतसोव सबाधो घोषान्वयप्रतीतिशून्यः तत्तदा लक्षणार्थैर्लक्षणीयतया प्रतिवाद्य [प्रतिपाद्य] मभिमतः।

एतस्मिन्निति कारिकापदार्थः। **प्रयोजने लक्ष्ये इति**। ननु प्रयोजने लक्ष्ये कथं प्रयोजनान्तरं नास्तीत्याह **एवमपीति**। पावनत्वादिप्रयोजनं लक्ष्यमुपकल्प्य प्रयोजनान्तरस्य लक्षणाफलत्वकल्पने यत्फलनिमित्तं प्रयोजनं लक्ष्यते, तस्यापि लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्था स्यादिति भावः।

**मूलक्षतिकारिणीति**। अस्यार्थः प्रकृताप्रतीतिकृदिति। प्रकृतं लक्ष्यत्वेन भवताङ्गीकृतं यत्प्रथमं प्रयोजनं तस्यैव एवंविधानत्वमूलत्वात्। लक्ष्यत्वेन परित्यागो न्याय्य इति भावः।

ननु यदि तटाद्यर्थमात्रबोधना लक्षणया विरामोऽभ्युपागम्येत तदैव पावनत्वादि-विशेषस्य प्रतिपत्तये तुरीया वृत्तिराश्रयणीया इति। इह च एतद्विशिष्टमेव तटं लक्षणा [लक्षणया] बोधयितुं [शक्यत] किं शक्त्यन्तरेणेत्यभिप्रायवान् प्रतिपक्षयति **नन्वित्यादि**। अधिकस्यार्थस्य पावनत्वादिवैशिष्ट्यस्य एतदुक्तं भवति, गङ्गातादात्म्येन तटप्रक्ष्यस्थ [तटप्रत्यय] स्तावत् लक्षणासाध्यः। गङ्गातादात्म्यप्रतीत्या च तटस्य दैवसिद्धमेव शैत्यादिविशिष्टत्वमिति। परिहरति **प्रयोजनेनेति**।

**अयमाशयः**। गङ्गातादात्म्यप्रतीतेः कार्य एव तटपावनत्वादिप्रत्ययः। न तु तदात्मा विशिष्टज्ञानस्य विशेषेण विशेष्यज्ञानपूर्वकत्वात्। इह हि गङ्गायामित्यत्र सरिद्भेद एवार्थः प्रतीयते न खलु तत्संलग्नः शैत्यादिरपि न हि धर्मिणि सङ्केत्ये तद्गतः सर्वोऽपि गुणादिसंकेत्यो भवितुमर्हति। ततश्च गङ्गातादात्म्यप्रत्ययेन तटस्य सरिद्भेदत्वमेव प्रतीयते। तत्कारणकश्च शैत्यादिप्रत्यय इति। तेन तटशैत्यादिप्रतीत्योर्हेतुफलरूपतया भिन्नकालीनत्वमेव वक्तुं युक्तमिति कथं द्वयोरेकवृत्तिमात्रविषयत्वमिति। तदिदं वक्ष्यति **विशेषाः स्युस्तु लक्षित इति**।

इममेव हृदिस्थमर्थं व्याप्तिदर्शनेन द्रढयति **ज्ञानस्येति**। हि यस्मात् फलं ज्ञेयगतम्।

**अयमाशयः**। ज्ञानस्य खलु विषयोऽप्यन्यः ज्ञेयगतं फलं चान्यत्। तथाहि सविकल्पकज्ञानेन स्वविषये घटादौ हेयोपादेयता बुद्धिरुपजन्यते तया च घटादौ हानमुपादानं वेति। अतश्च लाक्षणिकस्य तटप्रत्ययस्य ज्ञेयस्तटादिरन्यः। फलं च तन्निष्ठं शैत्यादिज्ञानमित्यन्तेन तयोः कार्यकारणतया भिन्नकालीनत्वमेव भवितुं युक्तमित्यर्थः।

> **चण्डिदासपण्डितास्तु** स्वरसतो व्याख्यानमिदमसहमाना आहुः। ज्ञानस्येति कारिकायां लाक्षणिकस्येत्यर्थः। यदि तु ज्ञानपदेन श्रूयमाणं ज्ञानसामान्यं विवक्षितं तदा ग्रन्थस्यासङ्गतिः। तथाहि यदि ज्ञानस्य फलमात्रं विषयव्यतिरिक्तं तदोमिति ब्रूमः। प्रकृतेपि गोस्वामिसन्तोषादेः विषयव्यतिरिक्तत्वस्योभयवादिसिद्धत्वात्। समनन्तरव्याख्यानप्रकारेण ज्ञेयगतफलस्य विषयगतव्यतिरिक्तत्वे विवक्षिते प्रकृत एव व्यभिचारः। न खलूक्तप्रकारेण हेयोपादेयताबुद्धिविषये घटादौ हानोपादानादिच्छेत्यादौ प्रतीत्या स्वविषये तटादौ किंचिज्जन्यते। अपि तु गोस्वामिसंतोषादिरिति। **इदमविचारिताभिधानम्**।

यत्र [यतो हि] हि ज्ञानस्य ज्ञेयगतफलस्य सद्भावस्तत्रैव तत्फलं ज्ञेयगतव्यतिरिक्तं न वेति सन्देहो भवितुमुचितः। नान्यत्र। न ह्याकाशकुसुमं सुगन्धि न वेति कश्चित् सन्दिग्धेन हि शैत्यादिप्रतीत्या तटादिगतं किं च जन्यते इति। तेषामेवोक्तरीत्या उक्तप्रकारेण शैत्यादिप्रतीतेरसतः फलस्य विषयव्यतिरिक्तत्वाव्यतिरिक्तत्वचिन्ताकोटौ दृष्टान्तयताम्। तेषामुपजीव्यानां किमाचक्ष्महे वयं मांसजिह्वाः। तदत्र ज्ञानस्येति कारिकायां यथाश्रूयमाणज्ञानपदार्थो ज्ञानसामान्यवचन एव भवितुं युक्तः। तदेव वृत्तिकृत् दृष्टान्तेन द्रढयति **प्रत्ययादेहीति**। प्रकटता ज्ञातता, पवनाममो [पावनादिको] धर्मः।

स च प्रत्यक्षादिना नीलादेर्विषयीकरणानन्तरं तत्र जातो ज्ञानजन्यो ज्ञानज्ञेयत्वनियामकः कश्चनातिशयः। येन ज्ञातोऽयं घट इति मतिरुत्पद्यते इति **भट्टमतं** सम्यक्। हेयोपादेयतयासंवेदनं संवित्तिः तेन लाक्षणिकतटप्रत्ययात्। फलं पावनत्वादिप्रत्ययः पृथगेव सिध्यतीत्यर्थः।

एवमुक्तरीत्या विशेषा इति लक्षिते लक्षणाविषयीकृते। उपसंहरति **ते चेत्यादिना**। प्रकरणसंगतिमाह **एवमिति**।

अनेकार्थस्य अनेकविष्णुसिंहाद्यभिधेयस्य शब्दस्य हरिप्रभृतेः। पुंयोगाद्यैर्नियन्त्रित इत्यन्वयः। नियन्त्रिते अर्थान्तरनिरुद्धप्रसवतया एकत्रार्थे व्यवस्थापिते अवाच्यसंयोगादिसाचिव्याभावादभिधायाः अविषयः। अञ्जनं व्यञ्जनं नाम व्यापारः। संयोगादिना आहुः। **संयोग इति**।

सशङ्खचक्रो हरिरित्यत्र शङ्खचक्रसंबन्धः सिंहाश्वसूर्यचन्द्रादिव्यावृत्तमच्युतमेवाभिधत्ते। एवञ्च शङ्खचक्रवियोगेऽपि तमेव। प्रतिषेधस्य प्रसक्तिपूर्वकत्वात्। रामलक्ष्मणाविति साहचर्याद्दाशरथी। रामार्जुनावित्यत्र······वध्यघातको विरोधः। सहानवस्थानविरोधे च्छायातपाविति अर्थः [अर्थः] फलं स्थाणुपदस्य शम्भुवाचकत्वे भवच्छेदानुरूपं फलं घटते। प्रकरणं बुद्धिसान्निध्यम्। युष्मदिति प्रकृतराजादिपरलिङ्गम्। विपक्षव्यावृत्तौ (?) धर्मः। अत्र कोपरूपचिह्नेन न मकराकारो ध्वजः। सन्निधिसामानाधिकरण्यं तेन पुरारातिपदं न नगररिपौ वर्तते। सामर्थ्यं तत्करणनियमः। कोकिलमत्ततासाम्यादनेन वसन्तस्यैव सामर्थ्यं न पुनर्मधुपदवाच्यस्य मद्यस्यापि। औचिती योग्यता सांमुख्यस्यैवाह कामकातरत्राणयोग्यत्वं देशस्तद्विशेषः। राजविजतु [?] वासुदेवादौ। कालस्तद्विशेषः दिवादीति न वह्नेः

रात्रौ च न रवेः । व्यक्तिः पुंस्त्वादिः । नपुंसको हि मित्रशब्दो न रवौ पुंलिङ्गकश्च न सुहृदि । इन्द्रेति षष्ठी । तत्पुरुषे समासात् उदात्तसूचिते हि इन्द्रस्य शमयिता शातयिता वा दैत्यादिरेव प्रतीयते । बहुब्रीहौ तु पूर्वपदान्तोदात्तनिर्णीते इन्द्र एव शमयिता शातयिता वेति स्वरः उदात्तादिर्न काव्ये विशेषप्रतीतिकृदिति तद्विषये नोदाहरणमिति **ग्रन्थकृतो**ऽभिप्रायः ।

इदं च **श्रीधर-चण्डिदासाद्याः** केचन प्राचीना आहुः । यद्यपि नोदात्तादेः स्वरस्य काव्ये विशेषप्रत्यायकतास्ति काकु ······विशेषाणां तु तत्सद्भावान्तदुदाहरणमुचितमेव । किं चोदात्तादेरपि ध्वनेः पाठशुकोक्तिदिनास्त्येव । तत्र विशेषबोधनं यदाह हास्यशृङ्गारयोः । स्वरितोदात्तं वीररौद्राद्भुतेषु उदात्तकल्पितम् । करुणबीभत्सभयानकेषु अनुदात्तस्वरितकम्पितमुत्पादयेदिदं न समीचीनम् । कालविशेषे हि मथ्नामि कौरवशतं समरेण [समरे न] कोपादिति काव्यनिष्ठैर्मथ्नाम्येवेति व्यङ्ग्यरूप एव विशेषः प्रत्याय्यते । न तु प्रकृतोक्तः संयोगादिभिरभिधेयविशेषः उदात्तादिभिरपि योऽसौरसविशेषः प्रत्याय्यते सोऽपि व्यंग्य एवेत्यादि **प्रपञ्चितमस्मत्साहित्यदर्पणे ।**

**एकुह इति ।**
एतावन्मात्रस्तनी एतावन्मात्राभ्यामक्षिपात्राभ्याम् ।
एतावन्मात्रावस्था एतावन्मात्रैर्दिवसैः ॥
अभिनयो हस्तादिचेष्टा ।

आदिशब्दात् "इतः स दैत्यः प्राप्तश्रीर्नैत एवार्हति क्षय" मित्यादावात्म निर्देशादयः ।

**भद्रात्मन इति ।** शोभनो (सुभगः) गजजातिविशेषश्च अधिरोहोऽवकलनमारोहणञ्च । विशालता बहुप्रसिद्धेर्दैर्घ्याद्वा, वंशः कुलं वेणुश्च । शिलीमुखो बाणो भ्रमरश्च । गतिर्ज्ञानं गमनञ्च । परः शत्रुरुत्कृष्टश्च । वारणो निवारको हस्ती । दानं त्यागो मदश्च ।

अत्र प्रकरणेन राजन्यभिधेयत्वेन नियन्त्रिते यः सारो प्रकृतो न गजार्थःप्रतीयते तस्याभिधादिशक्तिभिर्बोधयितुमशक्यतया व्यञ्जनाख्य एव······························"

………………गजार्थः प्रतीयते । तस्यासंबन्धत्वं मा प्रसांक्षीदिति गजनृपयोरुपमानोपमेयभावः कल्प्यते । तेन परवारणस्य इवेत्युपमानध्वनिः ।

**अयमाशयः**—इह हि परिवार ए शब्दे येयं द्वितीयार्थप्रतीतिस्तत्राभिधायाः प्रकृतार्थबोधनविरामात् लक्षणायाश्च मुख्यार्थबाधादिहेतुकत्वात् व्यञ्जनाख्या तुरीया वृत्तिरूपास्यैव ।

नन्वत्रार्थभेदेन शब्दभेद इति दर्शनादत्र शब्दद्वयमस्ति । तच्च साजात्यादैक्य भ्रमहेतुः । ततश्च प्रथमं परवारणादिशब्देन राजार्थबोधनाद्विरतायां प्रथमाभिधायां द्वितीयः शब्दस्तन्निष्ठाभिधाशक्तत्या द्वितीयार्थं बोधयतु किं वृत्यन्तरकल्पनेनेति चेन्न । अत्र हि शब्दद्वयकल्पने कथं प्रकृतार्थस्य प्रथमं प्रतीतिः द्वयोरभिधेयत्वेन पूर्वपश्चाद्भावनैयत्यासंभवात् ।

तेनात्रानेकार्थस्य शब्दस्येत्यादिसूत्रे **चण्डिदास पण्डितानामर्थ**भेदेन शब्दभेदमाश्रित्याविं [त्यैव] **द्वितीयव्याख्यानमसमञ्जसप्रायम्** ।

एवञ्च भ्रमिमरतिमित्यादावपि विषयशब्दस्य गरलार्थत्वे भुजगादिपदसाचिव्यात् न पुनरभिधाया तज्जीवनं किन्तु व्यञ्जनैव व्यापारः किन्त्वत्र द्वितीयार्थबोधे हेतुर्भुजगादिरूपः शब्दः भद्रात्मन इत्यादेरर्थः । येन ध्वस्त इत्यादौ तु नियामकाभावादनेकार्थविषयः सन्देहः व्यथाद्वयेषामपि (?) मेदिनीभृतामित्यादावुभयाभिधानञ्चेति **चण्डिदासपण्डिताः** । **एतन्निराकरिष्यामहे श्लेषालङ्कारव्याख्यानावसरे** ।

भद्रात्मन इत्यादौ तु द्वितीयार्थस्यानुभवसिद्धस्याभावं वदतो **महिमाचार्यस्य** गजनिमीलिकेव दुर्व्याख्या । सदुपदेश परस्परयैव द्वितीयार्थव्याख्याने व्यासवाल्मीकि प्रभृतिमहाकवीनां तादृशकाव्यनिबन्धस्य विफलताप्रसङ्गः । अर्थद्वयस्यापि प्रतीत्यविशेषात् व्याख्याविशेषविनिगमनायां प्रमाणाभावश्च । किंच द्वितीयार्थबोधने धर्मिकल्पनातो वरं धर्मकल्पनमिति भिन्नशब्दकल्पनात् भिन्नैव व्यञ्जनाख्या वृत्तिरङ्गीकर्तुमुचिता तस्याश्च यत्र तत्र प्रसवे इति प्रसङ्गभीत्या संबन्धत्वेन सैवाभिधाश्रीयत इति **सर्वमवदातम्** ।

एवं व्यञ्जनारूपमुपाधिं लक्षयित्वा तदुपायेयं लक्षयति **तद्युक्त इति**। ननु शब्दमात्रस्य चेदयं ध्वननव्यापारः कथं शब्दार्थयुगलं ध्वनिरिति सङ्गच्छतामित्यत आह **यत्स इति**। यद्यस्मात्स शब्दः अर्थान्तरयुगर्थद्वययुक्तः तदेव व्यञ्जको न त्वेकार्थः। तेन शब्दस्य व्यञ्जकत्वेऽर्थस्य सहकारिता किन्तु शब्दप्राधान्यादिह व्यञ्जनमूलत्वव्यपदेश इत्याशयः।

इत्यालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यश्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे द्वितीय उल्लासः।

# अथ तृतीय उल्लास:

एवं शब्दस्य व्यञ्जकत्वं निर्णीय प्राप्तावसरमर्थस्य व्यञ्जकत्वं दर्शयितुं तदुपदेश स्मारयति **अर्था इति**। प्रोक्ता: **पुरेति** वाक्यादयस्तदर्था स्युरित्यनेन [वाच्यादयस्त-दर्था: स्युरित्यनेन]। अर्थस्य व्यञ्जकता अर्थात् परेषां प्राचीनादिवृत्तिबोध्यत्वेनानु-मेयत्वेन वाऽभिमते व्यङ्ग्येऽर्थे। उच्यते विप्रतिपत्तिनिरासत्येत्यर्थ:। अर्थव्यञ्जकतेति पाठे तु सर्वेषामिति शेष:।

ननु सर्वेषां प्रायसोऽर्थानामित्यादिना पूर्वमर्थस्य व्यञ्जकत्वमुक्तमेव संप्रति कतमं विशेषमसंधाय [मभिसंधाय] पुनरुच्यत इति पृच्छति **कीदृशीति**। वाक्येति वाक्य-वाच्यसहितोऽन्यसन्निधिरिति मध्यमपदलोपीसमास:। वैशिष्ट्याद्वैलक्षण्यादिति वक्त्रादिषु प्रत्येकमन्वय:। प्रतिभाजुषां नवनवोल्लेखिबुद्धिशालिनां, न तु स्थूल-बुद्धीनाम्। **अन्येति**। प्राचीनादिवृत्तिबोध्यत्वनिरास:। व्यज्यते अनयेति व्यक्ति-र्व्यञ्जना। एवकारेणानुमानादि वाक्यार्थाद्भेदं विशदयति। प्रतिपाद्यते य: स प्रति-पाद्य:। शब्दप्रयोगस्य पदार्थत्वाद्यत्समवेता प्रतीतिरुत्पद्यते स इत्यर्थ:। काकु: ध्वनेर्विकार:। भिन्न कण्ठध्वनिर्धीरै: काकुरित्यभिधीयते" इत्युक्त: प्रकार:। तद्भे-दाश्च तत्र स्वरूपभेदाश्चानन्ता आकरेभ्यो बोद्धव्या:।

**अइ तमिति।**
अति पृथुलं जलकुम्भं गृहीत्वा समागतास्मि सखि त्वरितम्।
श्रमस्वेद स निश्वासनि:सहा विश्रमामि क्षणम्॥

श्रमाज्जाताभ्यां स्वेदसलिनलि: श्वासाभ्यां [स्वेदसलिलनि:श्वासाभ्यां] नि:सहा निरुद्यमेत्यर्थ: इयं हि किञ्चिन्नद्या आगतां एकाकिनीं वीक्ष्य कुतोऽयमस्तात्तव श्रम इति तर्कयन्तीं प्रतिवेशिनीं प्रत्युक्ति:। अत्र ममायं श्रमो जलकुंभवहनादेव न तु चौर्यरतकृतां "मा मा शंकिष्ठा" इति ववतुरभिप्रायरूपोऽर्थ: प्रकाश्यते। इदमुदा-हरणं त्विह वक्तृवैंशिष्ट्ये। न खल्वेकंविधान्तर [एवंविधार्थान्तर] प्रतिपत्ति: वक्त्रयां व वार्द्धकां [?[ द्विगुणविशिष्टायाम्। [जलकुंभवहनत्वं कामुकत्वं च]।

ऐन्निद्र्यं [औन्निद्रयं दौर्बल्यं चिन्ता अलसत्वं सनि:श्वसितम्।

मम मन्दभागिन्या: संबंधि सखि तवापि अहह परिभवति॥

अह ह परिखेदे त्वामित्यर्थे तवेति षष्ठी । परिभवतीत्यस्य हिंसार्थत्वात् । अत्र परकीय उन्नतादिः कथं परं [कारं] परिभवतीति ।

अन्वयार्थापत्त्या लक्षणयावत् सदृशमौभियादि [सदृशमौन्नित्यादि] लक्ष्यते । तदतिशयश्च लक्षणा फलरूपो व्यज्यते । तेन चाभिनतस्या एव वाक्यादिन्याः [?] कामुको दूत्योपभुक्त इति व्यज्यत इत्याशयः । एष चार्थो दूत्यां निसर्गदङ्गावादि [?] गुणविशिष्टायां न संभवतीति प्रतिपाद्याया एव दूत्या वैशिष्ट्यप्रयोजितः ।

**तथाभूतामिति** । अत्र उषितं स्थितमिति च दृष्ट्वेत्यस्य कर्मपदम् । अत्र दृष्टेत्यनन्तरं मयीति योज्यम् । खिद्यतेऽनेनेति खेदो मात्सर्यं [?] खिन्ने ग्लाने । अत्र खित्वे [खिन्ने] मयि खेदं भजतीत्येका सोपहासात् प्रासकाकुः । तस्याश्च मयि खेदोऽत्यन्तमनुचित इति व्यङ्ग्योऽर्थः । स च क्रोधप्रकर्षाविष्कृतत्वाद्वाच्येन परिप्रष्टो [परिपुष्टः] न तु तत् परिपोषक इति गुणीभूतः । नाद्यापि कुरुष्वित्यत्र चेतराम [?] काकुः । तया च कुरुषु किं न भजतीति प्रश्नरूपः किमर्थ एवाक्षिप्त इति । तन्मात्रस्यैव गुणीभावो न्याय्य इत्यभिप्रायवानाह न च वाच्यसिद्ध्यङ्गमिति । सिद्धिः शोभना निष्पत्तिः । अत्र शंक्यमित्यनन्तरं वाच्येनैव व्यंग्यस्य गुणीभूतत्वे प्रकृते तदुदाहर्तुं न काचित् क्षतिः । तथापि प्रसङ्गादयं विषयविवेकः । **उइमा इति** [तइआ इति]

तदा मम गण्डस्थलनिर्मितां दृष्टिं न नयस्यन्यतः ।
इदानीं सैवाहं तौ च कपोलौ न सा दृष्टिः ॥

निर्मितां निर्लग्नाम् । इहत्वेत्यादिना [?] ग्रन्थकृता प्रकाशितो व्यंग्योऽर्थः । एवंविधविच्छित्तियुक्तं वाक्यवैशिष्ट्यम् ।

**उद्देशोऽयमिति** । नर्मदाया उद्देश इत्यन्वयः । पवनानां सुरते घर्मश्रमानुकूलत्वान्नयनेन रागदीर्घदान्तेन च सुहृदुपचारात् । अकाण्डकोपः आकस्मिकक्रोधः ।

अत्र नर्मदोद्देशानां तत्सुरतानुगुणानां वाच्यानां वैशिष्ट्यं प्रयोजकम् ।

नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले ।
क्षणमात्रं यदि सन्ध्यायां भवति न वा भवति विश्रामः ॥

क्वचित्तु सं एणवरं हो इ वीसामो इति पाठः । च वरं केवलं तटस्थः [?] तस्य संनिधेः । प्रकरणवशात् व्यङ्ग्यस्यात्र वैशिष्ट्यम् ।

श्रूयते समागमिष्यति तव प्रियोऽद्य प्रहरमात्रेण ।

एवमेव किमिति तिष्ठसि तत्सखि सज्जय करणीयम् ॥

अत्र भवेति [तवेति] प्रियेति सखीं प्रति सोल्लुण्ठनवचनम्[१] । अन्यत्र च रहस्य-गोपनम् । एवमेवाङ्गमण्डलाद्यकृत्वा[२] सज्जय सज्जीकृत्वा[३] । अत्रोक्तरूपे व्यंग्येति [अत्रोपपतिमिति][४] पत्यागमनप्रस्ताववैशिष्ट्यं प्रयोजनम् ।

**अन्यत्रेति** । अस्मि अहम् । प्रच्छन्नगुप्तः । अत्र प्रतिपादिदेशवैशिष्ट्यम् ।

गुरुजनपरवश प्रिय किं भणामि तव [मन्द] भागिन्यहम् ।

अथ[५] प्रवाहं [सं] न यासि व्रजसि व्रज स्वयमेव जानासि करणीयम् । अन्यथा अनुमरणं[६] न जीवामि । अत्र वसन्तकालस्य वैशिष्ट्यम् ।

**द्वारेति** । निरन्तरे निकटे आकूतं भावः । स च शृङ्गारचारी[७] लज्जाख्यः [शृङ्गारव्यभिचारी लज्जाख्यः] । तेनान्यार्थ धीहेतुरित्यत्रान्यार्थशब्देन वस्त्वलंकार रसादिलक्षणस्य द्विरूपस्यापि ध्वनेः सङ्ग्रहः । [८]एवमलङ्कृतित्वस्यापि [रसस्यापि] ध्वनेः संग्रहः । एवमलंकृतिरूपस्यापि व्यंग्यस्योदाहरणमूह्यम् । चेष्टादेरित्यादि-ग्रहणाद्वर्णनीयनायकादिगतसात्विकादिपरिग्रहः ।

**निराकाङ्क्षेति** । अयमर्थः । अत्र अहपित्तु न [अतिपृथुलं] मित्यादौ [९]वक्तुर्वाक्यादितरोऽर्थः प्रतीयते । नासारभिदादे विषयः [नासावभिधादेर्विषयः] तस्य [१०]स्वार्थनिरोधननियमात् न चार्थमात्रस्य । तथाहि प्रतिवेशिन्यादिभिस्तत्का-लसंनिहितैरल्पैर्वाऽनुमाने न काचित् क्षतिरस्माकं । यदि च काव्यार्थभावनया सहृ-दयैरनुमीयते तथा वक्त्रादीनां [११]तथाविधाभिप्रायविरहस्तनैः व्यभिचारः । किन्त्वे-वंविधानां काव्यानां कविप्रतिभासोक्तजन्मनां प्रामाण्यानावश्यकत्वेनासन्दिग्धा-दिर्ववत्वं हेतोः इत्यादिकं **प्रपञ्चितमस्मत्साहित्यदर्पणे** ।

[१२]एवंप्रायाश्च उक्तयः उक्तोदाहरणेषु यथायोगं सुमतिभिरवगन्तव्याः । क्रमेण परिपाट्या वाच्यार्थव्यञ्जकत्वे[१३] । पिहुलमित्यादि लक्ष्यार्थस्य, उन्निद्दमित्यादि व्यंग्यार्थस्य ।

---

१. Pt. text reads सोत्कम्पनवचनम् for सोल्लुण्ठनवचनम् ।

२. „ reads अङ्गमण्डलंकृत्वा for अङ्गमण्डलाद्यकृत्वा ।

३. „ reads सज्जीकरु for सज्जीत्वा ।

४. „ reads निजपत्या ।

**उम्बलिच्चलेति** । **शब्देति** । अत्र प्रमाणपदेन सर्वस्यैव काव्यरूपशब्दस्य सुप्रकाशरसास्वादमित्याह अयोगव्यवच्छेदेन प्रामाण्यनियमः सूचितः । [१]प्रमागानन्तरं प्रत्यक्षादि तद्बोध्योऽर्थो न प्रकृत्याद्यतिशयद्योतक इति भावः । एतेनार्थस्य व्यञ्जकत्वे शब्दस्यापि सामर्थ्यं कल्पनीयम् । न त्ववर्जनीयम् । **सन्निधिमात्रत्वमिति** [२]सर्वत्रैवोभयशक्तिमूलता ।

किन्तु यत्र यच्छक्तिरुत्कटा तत्र तन्मूलताव्यपदेशः द्वयोरुत्कटत्वे उभयशक्तिमूलमिति सर्वमवदातम् ।

इत्यालङ्कारिकचक्रवर्तिध्वनिप्रस्थानपरमाचार्यमहापात्रश्रीविश्वनाथ कविराजकृतौ काव्यप्रकाशदर्पणे तृतीय उल्लासः ।[३]

---

५. Pt. text reads अद्य प्रवासं for अथ प्रवासं ।

६. ,, reads अर्थादामरणं for अनुमरणम् ।

७. ,, reads श्रृङ्गाररसः for श्रृङ्गारचारी ।

८. ,, reads एवमलंकृतेरस्यापि for एवमलंकृतिरूपस्यापि ।

९. ,, reads कावक्वादि वैशिष्ट्यादितरोऽर्थः ।

१०. ,, reads स्वार्थबोधननियमात् for स्वार्थनिरोधननियमात् ।

११. ,, reads तथाविधादिप्रियविरहस्तव्यैः for तथाविधाभिप्राय विरहस्तनैः ।

१२. ,, reads एवंप्रायानुक्तोदाहरणेषु for एवंप्रायाश्च उक्तयः ।

१३. ,, reads वाक्यार्थव्यञ्जकत्वेष्वपि ।

१. ,, reads प्रमाण for प्रमाणानन्तरं ।

२. ,, reads सर्वशक्तिमूलता for सर्वत्रैवोभयशक्तिमूलता ।

३. adds to the colophon इदं पुस्तकं बालभट्ट अयाचितेन लिखितम् ।

# अथ चतुर्थ उल्लासः

## अविवक्षितवाच्यध्वनिः

इह हि "तददोषा"विति काव्यसामान्यलक्षणकारिकायामुद्दिष्टस्य काव्यरूपस्य धर्मिणो विशेषा उत्तमादयः, शब्दार्थयोः स्वरूपञ्च निरूपितम्। तदिदानीं दोषादिरूपणे प्राप्तावैरेकय [प्राप्तावसरे] कथमुत्तमादिकाव्यभेदप्रभेदप्रदर्शनमित्याक्षेपयन्[1] वृत्तिकृदाह **यद्यपीति। प्रदर्शित इति** प्रकर्षेण अर्थात् भेदप्रभेदाभ्यां प्रदर्शिते ख्यापिते, हेयता दोषाणाम्, उपादेयता गुणालङ्काराणाम्।

**अयमर्थः**। दोषाणां रसस्य कुतोऽपकर्षोत्कर्षज्ञानं सुकरं स्यादिति। **काव्यभेदानिति**। काव्यशब्देनात्र काव्यविशेष उक्तरूपो ध्वन्यादि। तस्य भेदाः अविवक्षितवाच्यादयो विशेषाः अत एवाभिधामूलस्य प्रथमं विवेक्तुमुचितत्वेऽपि पूर्वोक्तानुसारेण सूचीकटाहन्यायेन प्रथमं लक्षणामूल विवेचयति[2]। अभिधामूलेति। **लक्षणामूलेति**।

लक्षणामूलत्वादेव वाच्यमभिधेयमविवक्षितम् बाधितस्वरूपं यत्र[3] स एकोऽविवक्षितवाच्यो नाम ध्वनिः काव्यभेदः। स चार्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविध इत्यर्थः। **गूढेति**। अगूढव्यङ्ग्यप्रयोजितगुणीभूतव्यङ्ग्यव्यवच्छेदः। अनुपयुज्यमानत्वमर्थात् स्वरूपमात्रेण अर्थान्तरेषु विशेषरूपम्। संक्रमितमित्यस्यार्थः परिणमितम्। [?]क्वाक्वादिसाहाय्यसूचनम्। परिणामश्च तत्वादपरिच्युतस्य धर्मिणोऽवस्थान्तरगमनम्।

अस्मि अहं। समुदायः समवायः। **अत्रेति**। विदुषां समुदाय इत्यादि प्रतिपादनेनापि [4]वक्तृप्रतिपादने सिद्धे वचनीति [वच्मीति] पुनर्वचनम्। पौनरुक्त्यापातात्। मुख्यार्थे बाधितवचनविशेषरूपोपदेशार्थम्। उपदेशश्च न वचनादन्यः।

---

१. Printed text reads अनूद्य after आक्षेपयन्।

२. Printed text reads लक्षयति for विवेचयति।

३ Pt. text add, अत्र णिचा।

[१]आदिशब्दात्प्रतिपाद्यस्य संमुखीनत्वादेव नवे प्रतिपाद्यत्वे त्वामिति पुनर्वचनम्। [२]अन्यव्यावृत्ते सिद्धे त्वामिति पुनर्वचनम् । अन्यथा वृत्तिविशिष्टं त्वतर्थं लक्षयति । एवं वचनी [वच्मी] त्यनेनापि अहमर्थे अस्मीति पुनर्वचनमन्यव्यावृत्तिविशिष्टं सदर्थम् । एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति, तेन वक्तुर्वचनस्यावश्यं ग्राह्यत्वादिरूपोऽर्थः प्रतिपाद्यते ।

अत्यन्ततिरस्कृतवाच्यं विवृणोति **क्वचिदिति**। उदाहरति **उपस्कृतमित्यादि** [**उपकृतमित्यादि**] । अत्र ह्युपकारसौजन्यसुखितत्वादिभिः प्रतिपादितैस्तद्विपरीतान्य[३]पकृतत्वादीनि लक्ष्यन्ते । अपकारादयश्चोपकारादीनां न विशेषरूपाः। किन्तु ततोऽत्यन्ततिरस्कृता अर्था इत्यत्रात्यन्ततिरस्कृतवाच्यत्वम् ।

अभिधामूलमाह **विवक्षितमित्यादि** । अभिधामूलत्वादेवात्र वाच्यं विवक्षितमबाधितम् । अपरं विवक्षितवाच्यादन्यं व्यङ्ग्यनिष्ठं व्यङ्ग्ये निष्ठा तात्पर्यं यस्य एतेन गुणीभूतव्यंग्यव्यवच्छेदः । एष विवक्षितान्यपरवाच्यो ध्वनिः ।

## असंलक्ष्यक्रमध्वनिः

**कोऽपीति** । असंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यंग्यश्चेति द्विविध इत्यर्थः। तैरित्यनन्तरं व्यक्त इति शेषः । इति हेतोः स क्रमः न लक्ष्यते उत्पलपत्रशतव्यतिभेदवल्लाघवादिति शेषः ।

अत्र [४]च रसवति काव्ये [५]आस्वादपर्यन्तगमनात् वस्त्वलङ्काररूपव्यङ्ग्ययोरपि प्रतीति[६]र्नविलम्बिता । नीरसेति प्रतीतिविलम्बात् तत्साजात्येन [७]लक्ष्यक्रमव्यवहारः । तत्रासं[८]लक्ष्यक्रमसंलक्ष्यक्रमयोर्मध्ये प्रथमस्य व्यवस्थाहेतू रसादिरिति पिण्डार्थः ।

---

१. Pt. text reads आदिपदात् for आदिशब्दात् ।

२. ,, reads अन्यथा व्यावृत्ते for अन्यव्यावृत्ते ।

३. अन्यापकृतत्वादीनि for अन्यप्रकृतत्वादीनि ।

४. Pt. text omits च।

५. Pt. text adds झटिति after काव्ये ।

६. Pt. text reads प्रतीतिरत्नविलम्बिता for नविलम्बिता ।

७. Pt. text reads लक्ष्यस्य क्रमव्यवहारः for लक्ष्यक्रमव्यवहारः ।

८. Pt. text reads तादृश for तत्र । प्रक्रम for अक्रम ।

तदाभासेति । रसाभासभावाभासौ, तच्छान्तिर्भावशान्तिः । अक्रम इति दुरूहक्रमः । रसादिस्वरूपादलङ्कारादलङ्कार्यतया अलङ्कारकृतपरिपोषपात्रत्वेन यथोदाहरणदर्शनेन विविक्त करिष्यते हरिष्यते (?) वाक्यार्थे रसादिरूपे वर्णनामात्ररूपे वा अङ्गभूतः शोभाविशेषाधायकः । रसस्याङ्गत्वे रसवदलङ्कारः । भावस्य प्रेयोऽलङ्कारः एतयोराभासस्य ऊर्जस्वी । भावशान्तेः समाहितम् । समाहितादय इत्यादिशब्दात् भावोदयादयः गुणीभूतव्यङ्ग्याभिधाने पञ्चमोल्लासे (वक्ष्यन्ते) ।

## रसस्वरूपम्

स्वं वास्तवं रूपम् । **कारणानीति** । लोके रामानुगतस्य रत्यादेः स्थायिनोऽनन्त रतिनोत्पन्नैर्भावान्तरैरनुच्छिन्नवासनस्य यान्यालम्बनोद्दीपनतया कारणानि सीतादिचन्द्रादीनि, अथ कार्याणि कटाक्ष [1]भ्रूक्षेपादीनि, सहचारीणि हर्षादीनि तानि नाट्ये अभिनेये[2] नाटकादौ, काव्ये [3]ग्रन्थरूपे महाकाव्यादावुपनिबद्धानि यथासंख्यं[4] विभावादीति [नि] व्यापारवत्तया न तु संज्ञाभेदमात्रेण विभावादिशब्दव्यपदेश्यानि तैश्च विभावाद्यैर्व्यक्तः प्रा ... ष्कृतः[5] [आविष्कृतः] स्थायिभावो भाव्यते वास्यत इति व्युत्पत्या वासनात्मतया सहृदयहृदयानन्दनो रसः । स्मृतो ध्वनिकारादिभिराम्नातः[6] । अत्र विभावस्य व्यापारो विभावनं भावकगतवासनान्तर्लीनस्य रत्यादेर्विशेषेणास्वादाङ्कुरणयोग्यतानयनं अनुभावनम् तथाभूतस्य तस्य परिपोषणं, व्यभिचरणं विशेषेणाभिमुखे चारणं, व्यक्तो व्यक्तीकृत एव रसः । न तु दीपेन घट इव पूर्वसिद्धो व्यज्यते । तदुक्तं लोचनकारैः "रसाः प्रतीयन्ते इति त्वोदनं पचतीतिवद्व्यवहार" इति । एतेन प्रतीतिशरीरमेव रस इति सूचितम् ।

अत्र यद्यपि मिलितो विभावादिः पानकरसन्यायेन चर्व्यमाणोऽखण्डरूप[7]नवरसस्तथापि लोकप्रसिद्धप्राधान्यप्रत्यभिज्ञानात् स्थायिभावो रस इत्युक्तम् । इह च सात्त्विकानामनुभावरूपतया न पृथगुक्तिः । अत्रार्थे महर्षिसंमतिमाह **उक्तं हीति** । भरते भरतप्रणीते शास्त्रे निष्पत्तिः । अत एवाविर्भावः ।

---

१. Pt. text reads भुजाक्षेपादीनि for भ्रूक्षेपादीनि ।

२. ,, reads अभिनये for अभिनेये ।

३. ,, reads भव्यरूपे for ग्रन्थरूपे ।

४. ,, reads यथासंभव for यथासंख्यम् ।

५. ,, reads व्यञ्जितः for आविष्कृतः ।

६. ,, reads रत्यादेर्विशेषणश्च for रत्यादेर्विशेषेणा० ।

७. ,, reads अखण्डरूप एव for अखण्डरूप नव० ।

संप्रत्यत्र भारतीयसूत्रे आचार्यः देशीयव्याख्यानतुच्छताप्रकटनपूर्वं सांप्रदायिकव्याख्यानं प्रदर्शयितुमारभते **एतदिति** विवृण्वते । समनन्तरं वक्ष्यमाण भट्टलोल्लटश्रीशङ्कुकादयः । आलम्बनकारणानि ललनापुरुषादीनि, उद्दीपनकारणानि उद्यानादीनि । उक्तं हि ।

आलम्बनं स तु रसो यमालम्ब्य प्रवर्तते ।
उद्दीप्यते रसो येन स चोद्दीपनसंज्ञकः इति ।।

## श्रीशङ्कुकमतम्

नटे इत्युपलक्षणं वाक्यपाठकेऽपि [काव्ये नाट्येपि] ज्ञेयम् । इदं च भट्टलोल्लटप्रभृतीनां मतमसमीचीनम् । तदुक्तं **मम साहित्यदर्पणे** ।

पारिमित्यात् लौकिकत्वात् सान्तरायतया तथा ।
अनुकार्यस्य रत्यादेरुद्बोधो न वसीभवेत् ।। ३-१८

[1]तथा शिक्षाभ्यासादिमात्रेण शब्दवादे [?] [स्वरूपतां दर्शयन् नर्तको नैव रसस्यास्वादको भवेत् काव्यार्थभावनेनायमपि सभ्यपदास्पदमिति । सान्तरायता नाटककाव्यश्रवणादिः । राम एवायमिति रामत्वस्यायोगव्यवच्छेदेन, अयमेव राम इत्यन्ययोगव्यवच्छेदेन चोभयथापि या सम्यक्[2]प्रतीतिः । न वा रामोऽयमिति औत्तरकालिका बाधविशिष्टा रामोऽयमिति च या मिथ्याप्रतीतिः, रामः स्याद्वा न वायमिति या च संशयप्रतीतिः, रामसदृशोऽयमिति या सादृश्यप्रतीतिः, ताभ्यो विलक्ष्य या [विलक्षणया] चित्रतुरगादिन्यायेन यथा बालानां चित्रतुरगे वस्तुपरिच्छेदशून्या तुरगोऽयमिति बुद्धिर्भवति तथाविधया रामोऽयमिति प्रतीत्या[3] ज्ञानेन ग्राह्ये नटे अभिनेतरि, **सेयमित्यादे**र्देवादित्यन्तश्च यथाक्रममालम्बनोद्दीपनाभिधायक संभोगविप्रलम्भश्रृङ्गारप्रधानस्य । आदिशब्दादितरेषामपि[4] काव्यानां यदनुसन्धानं साक्षादिव करणं, तद्बलात् शिक्षा उपदेशः अभ्यासः पौनःपुन्येन प्रवृत्तिः । ताभ्यां वर्तितं स्वकार्यमश्रुरोमाञ्चादि तस्य प्रकटनं येन तथाभूतेन नटेनैव प्रकाशितैः कार्यकारणसहकारादिभिर्विभावादिशब्दव्यपदेश्यैरनुमीयमानो रत्यादिभावः तदा रामतादात्म्येन प्रतीते नटे सामाजिकानां प्रेक्ष (का) णां वासनया तन्मयीभावदायिन्या धिया चर्व्यमाणः पुनःपुनरनुमीयमानो रस इति **श्रीशङ्कुकनामा कश्चिदाचार्य** इति संबन्धः ।

---

१. Pt. text omits from तथा to पदास्पदमिति ।

२. ,, reads या साम्यप्रतीतिः for या सम्यक् प्रतीतिः ।

३. ,, reads प्रतिपत्या for प्रतीत्या ।

४. ,, reads आदिपदादितरैक्यमिव for आदिपदादितरेषामपि ।

कारणादिभिः किं भूतैः ? तथा कृत्रिमतया अनभिमन्यमानैः। अनुमीयमान इत्यत्रानुमाने हेतुमाह संयोगात् संबन्धात् कोऽसौ संयोग इत्याह **गम्येति**। गम्यमनुमेयं रत्यादि गमकमनुमापकं कार्यकारणादि, रसनीयत्वेन स्पृहणीयत्वेन स्थायित्वेन दार्ढ्यदर्शनात् कालान्तरेऽप्यविच्छेद्यत्वेन । अत्रापि नटगतस्य रत्यादेरनुमापकानां सामाजिकानामनुमानाभासोत्पत्तेः बाध [ढ] सुप्रकाशानन्दचमत्काररूपस्याविर्भावः। अनुमानकारणकत्वाङ्गीकारे तु रसस्य कार्यत्वप्रसङ्गः अस्त्विति न, अग्रे निराकरिष्यमाणत्वात् ।

## भट्टनायकमतम्

न ताटस्थ्येन औदासीन्येन रसः प्रतीयते तथा सत्यरसनीयत्वापत्तेः [१]ज्ञानगतत्वेन सभ्यानां व्रीडातङ्काद्यापत्तिप्रङ्गात् । यदि चोत्पद्यते किं सीतादिविषयत्वेन आत्म-[२]कान्तादिविषयत्वेन वा ।। आद्ये पातकित्वापातः । द्वितीये रत्यादिसद्भावप्रसङ्गः । नाभिव्यज्यते पूर्वसिद्धत्वा[३]......दीपेन घटस्येव हि पूर्वसिद्धस्यैव[४] व्यङ्ग्यत्वं, किन्तु काव्यनाट्यनिष्ठेन [५]भावकत्वाख्येन व्यापारेण भाव्यमानः सकलसभ्यनिष्ठतया संभाव्यमानः स्थायी रामादौ स्थिरतरो भोगेन भुज्यते विषयीक्रियते ।

कोऽसौ भावकत्वव्यापार इत्याह **अभिधात इति**। द्वितीयेनेत्युपलक्षणम् । ति नयस्य मते [भट्टनायकस्य मते] एक एवाभिधाव्यापारस्तन्मतेन द्वितीयेन, यस्य द्वौ तन्मतेन तृतीयेन, यस्य त्रयस्तन्मतेन चतुर्थेनेत्यर्थः । विभावादिभिः साधारणीकरणं च रसादिकवित्वभाविकानां भेदाभावेन प्रत्यायनं, तदेव तस्य भावकत्वव्यापारस्यात्मा स्वरूपम् । कोऽयं भोग इत्याह **सत्वेति**। सत्वस्योद्रेकाद्रजस्तमसी अतिभूयाविर्भावात् । प्रकाशःस्पष्टतरोऽयमानन्दस्तदेकरूपाया[६] संवित् ज्ञानं, तत्र विश्रान्तिर्वाह्यमेव ग्रहणराहित्येन स्थैर्यं तदेव सत्वं स्वरूपं यस्य तथाविधेन भोगेनेत्यर्थः। विश्रान्तिगतत्वेनेति पाठे विश्रान्तिगतोऽर्थात् प्रमाता तस्य भावस्तत्वं इति **भट्टनायकस्य विवरणमित्यर्थः**।

अत्रानुकार्यनिष्ठस्य स्थायिनः साधारण्येन प्रतीतस्यापि रसत्वं असंनिहितस्य भोगविषयतानुपपत्तेः भोगश्च संविदानन्दस्वरूप [सच्चिदानन्दस्वरूप] इत्युक्तम्

---

१. Pt. text reads नानुगतत्वेन for ज्ञानगतत्वेन ।

२. ,, reads आत्मकार्थतादिविषयत्वेन for कान्तादिविषयत्वेन।

३. ,, reads पूर्वसिद्धत्वाभावात् ।

४. ,, reads पूर्वसिद्धस्येव for पूर्वसिद्धस्यैव ।

५. ,, reads काव्यं नाट्यनिष्ठेन for काव्यनाट्यनिष्ठेन ।

६. ,, reads रसोद्रेकरूपाया for तदेकरूपाया ।

रसस्य च तदेकार्थतया निरूपयिष्यमाणस्य कथं तद्विषयत्वं उपचारस्तु भोगविषयताङ्गीकारे अस्माक एव पक्षः।

## सिद्धान्तपक्षः

सप्रति "लोक" इत्यादिना **"इत्याचार्यश्रीमदभिनवगुप्तपादा"** इत्यन्तेन ग्रन्थेन तन्मतमुपन्यस्य ग्रन्थकारेण तेषु गौरवप्रकटनेन तन्मतस्यैवात्मनोऽभिमतत्वमुपदर्शितम्। ग्रन्थार्थस्तु। लोके न तु नाट्यकाव्ययोः स्थायिनोऽनादिवासनान्तर्लीनरत्यादेरुत्पत्तेरनुमाने (व्यज्यमाने) अभ्यासस्य पाटवमुत्कर्षः। तद्वतां न तु व्याप्त्याद्यनुसंधानविलम्बितानां सामाजिकानां स्थायी रत्यादिकः, तैः प्रमदादिभिरेव कारणकार्यसहचारिपदवाच्यतापरित्यागेन पूर्वोक्तालौकिकविभावनादिव्यापारवत्वात्। न तु पर्यायान्तरवाच्यत्वमात्रेण लौकिकविभावादिशब्दव्याहार्यैः साधारण्येन प्रतीतैरभिव्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतः। पानकरसन्यायेन यथा-पानके खण्डमरीचकर्पूरादीनां रसा मिलितानामुपपाद्यास्वाद्यते तथा संवलितविभावादिसुखचमत्कारात्मकः स च चर्व्यमाणः आस्वाद्यमानः शृङ्गारादिको रस इति संबन्धः। साधारण्यं प्रतीतिस्वरूपं दर्शयति **ममैवेत इत्यादि**। प्रतिनियतपुरुषगतत्वेन योऽसौ यस्य विशेषस्तस्य सैवेत इत्यादिरूपेण स्वीकारस्य न ममैवेत इत्यादिरूपेण परिहारस्य च यो नियमस्तस्यानध्यवसायापादनिश्चयात्। अत्र स्थायी रत्यादिक इति वचनमस्थायिनां व्यभिचारित्वप्रकटनार्थम्। तदुक्तं रसावस्थः परं भावः स्थायितां प्रतिपद्यत इति। किमाकारः न [स] चर्व्यमाण इत्याह **नियतेति**।

यद्यपि—सवासनानां सभ्यानां रसस्यास्वादनं भवेत्।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्यात्मसंनिभा॥

इत्युक्तदिशा रसान्तर्वर्तिष्वपि विद्यमानेषु नियतः सवासनोऽथ प्रमाता, तन्मात्रगतोऽपि, न श्रोत्रियजरन्मीमांसकादिनिष्ठसाधारणेति। उपायानां विभावादीनां पूर्वोक्तप्रकारसाधारण्यप्रतीतिप्रभावात् तत्कालेति वेद्यान्तरेणानवच्छिन्नप्रवाहापरिमितभावः साधारण्याभिमानो यस्य तथाभूतेन प्रमात्रा अत्र च पारिमित्याख्यं वेदनमेवापारमित्याति भानं रसप्रतीतिसकलाभिमानवितानवात् (?) रसास्वादऐकरूप्यं पुनः साधारण्येति वचनम्। फलसंबन्धाप्रकटनाय रत्यादीनामपि हि स्वगततया प्रतीत्यै सभ्यानां व्रीडातङ्कादिर्भवेत्। परगतत्वेन तु कुतश्चमत्कारेच्छिकः एवं विभावादयः स्वयं साधारण्येन प्रत्याययन्ति।

एवञ्च रत्यादीनां साधारण्येन प्रतीतावपि साधारणरत्यादिवदास्वाद्यत्वं ततश्च साधारणत्वारोपितत्वेनोन्मिषतीति **चण्डिदासपण्डिता आहुः तच्चिन्त्यम्** ।

सति हि साधारणेषु श्री [स्त्री] पुरुषोत्तमादिषु रत्यभावप्रसङ्गात् ।

किन्तु विच्छिन्नाशेषविषयव्यासङ्गे रसप्रतीतिकालेऽननुभूयमानो साधारण्यातिमानो विचारदशायामुन्मिषतीति भावः । अमित्रोऽपि प्रतीतिशरीराद्गोचरीक्रियते । अर्थादुपचारवृत्या चर्व्यमाणा आस्वादनं तदेवैकं प्राणो जीवनं यस्य ततो बहिरसंभवात् **विभावादीति** । विभावादि प्रतीत्यन्वयव्यतिरेकार्थविधायी एतच्च पानकेत्यादिव्याख्यानेन सुव्यक्तमेव ।

इहास्मत्पितामहानुजकविपण्डितमुख्य-**श्रीचण्डिदासपादैरुक्तं**-"परमार्थतस्त्वखण्ड एवायं रसो वेदान्तप्रसिद्धब्रह्मतत्ववद्वेदितव्य" इति ।

यद्यपि चर्वणमास्वादनं तच्च स्वादः "काव्यार्थसंभेदात्मानंद समुद्भव" इत्युक्तनयेन [1]रसादनतिरिक्तम् तथापि चर्व्यमाणो रस इति काल्पनिकं भेदमुररीकृत्य कर्मकर्तरि वा प्रयोगः । पर इवेत्याद्युत्प्रेक्षणैश्चालौकिकानन्दरूपत्वं सूचितम् । **अलौकिकेति** चमत्कारैश्चित्तविस्तारैर्विषयापर पर्यायैस्तद्रूपः । तस्य च पश्चाद्वचनेन सकल रसप्राणत्वं ।

यदाहु*स्त्रिकलिङ्गभूमण्डलाखण्डलमहाराजाधिराज**श्रीनरसिंहदेवसभायां धर्मदत्तं**[3] स्थगयतः सकलसहृदयगोष्ठीगरिष्ठ कविपण्डितास्मत्प्रपितामहः[4] [5]श्रीमन्नारायणदासश्चमत्कार एव सकलरसप्राणभूतः तस्य रागाद्यंशशबलत्वे यथायथं शृङ्गारादिव्यपदेशः, तदभावेत्वद्भुतव्यपदेश इति [6]कविभिरा काल्पनिकभेदमुररीकृत्योक्तम् ।

---

१. Pt. text reads रसास्वादनातिरिक्तः for रसादननिरिक्तम् ।
२. ,, ,, अपरपर्यायः for अपरपर्यायैः ।
३. ,, ,, स्थगयन्तः for स्थगयतः ।
४. ,, ,, अस्मत्स्वपितामह for अस्मत् प्रपितामह ।
५. ,, ,, नारायणदासपादाः for नारायणदासः ।
६. ,, ,, कविभिः कराल्पनिकं for कविभिराकाल्पनिकम् ।

*May be interpreted as श्रीकलिङ्ग (ORISSA) or त्रिलिङ्ग (Andhra)

ननु रसस्य विभावादिज्ञानकायस्य कथं व्यंग्यत्वमित्याह स चेति, न खलु प्रतिनियतः कारणविनाशसमकालं कार्यविनाशः, रसप्रतीतेस्तु विभावादिप्रतीतिसम्वलिततयैव सद्भावात्। नापि विभावादयो रसस्य ज्ञापका इत्याह **नापीति**। हेतुमाह **सिद्धस्येति**। विभावादिस्वरूपकारणात् बहिरिति शेषः। यदि रसे विभावादयो न कारणानि, न च ज्ञापकाः तर्हि कीदृश इत्याह **अपित्विति**। व्यञ्जितत्वमपि पूर्वसिद्धि एव भवति। यदाहुः—

स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारणात्। [कारकात्]

इत्यत्राह **चर्वणीय इति**। चर्वणा आस्वादनम्। तद्विषयं चास्य काल्पनिकं स्वादः काव्यानुसंभेदोऽत्मानन्दसमुद्भव इत्युक्तदिशा स्वादानतिरिक्तत्वात्, तर्हि कथं व्यंग्यत्वं व्यञ्जनविषयत्वाभावात् इति चेत् सत्यम् अत एवाहुर्त्रिलक्षण एवायं कृतज्ञप्रभेदेभ्यः [ ? ] आस्वादनाख्यः कश्चित् व्यापारः, किन्तु प्रकाशितं प्रादुष्कृतं प्रकाशमात्रत्वेनाभिधादिविलक्षणव्यापारमात्रग्रहेणैव यस्माद्भावरसादीनां व्यञ्जकत्वमुक्तं भवतीति, एतदेवाह **कारकेति**। अन्यत्कारणं, एतेनास्य रसस्य सद्भावे चर्वणाभिन्नेऽपि चर्वणैव प्रमाणमिति सूचितम्। एतदुक्तं भवति—

न खल्वन्यत्रादर्शनमात्रेणानुभूयमानं वस्तुस्वरूपापह्नवः शक्यक्रिय इति **चर्वणेति** चर्वणा आस्वादना तस्या अपि रसानतिरिक्तस्य निष्पत्तेः कादाचित्कया उपचरितया कार्योऽप्युच्यतां कार्य इति व्यवह्रियताम्, तथा सत्येव दुर्ग्रणिहिलस्य [ ? ] भवतः संतोषपूरणादिति भावः।

**लौकिकेति**। योगज्ञानं हि द्विविधम् मितमपरिमितञ्च। तत्र येन योगिनोऽभ्यासदशायां ध्यानेनासंनिहितमपि वस्तु विषयीकुर्वन्ति तत्प्रथमम्। तद्धि[1] लौकिकीयप्रत्यक्षादिप्रमाणं, तत् ताटस्थ्येन औदासीन्येन योऽसाववबोधः प्रकाशः तच्छक्तिः तत्स्वरूपं तच्च लौकिकवस्तुस्वरूपमात्रनिष्ठत्वान्मितम्। यच्च विज्ञानानन्ददानस्वार्थमात्रपर्यवसितं तद् द्वितीयम् तद्वलितरसंपर्करहितं [?] यत्पुरपरिमितस्वप्रकाशानन्दरूपत्वात् रसाद्यंशसंवननत्वाच्च। तयोर्द्वयोरपि विलक्षणं लोकोत्तरस्वसंवेदनस्तद्गोचरः। तच्छरीरान्तर्गततया तत् प्रकाशेनैव प्रकाशितो रत्यादिभोग इत्येवंरूपतया यदि प्रत्यक्षं वदिष्यसि तत्वतस्तस्य तु दुर्जन इति भावः [?] **तद्ग्राहकमिति**। स रस एव ग्राहकं ज्ञानं, तच्च निर्विकल्पक इन्द्रियस्यपातमात्राज्जात्यादिवैशिष्ट्यं शून्यस्वलक्षणविभासः तद्धि इन्द्रियसंबन्धिमात्रग्राहि रसस्तु असंनिहितानामपि परिभावादीनां यत्परामर्शनमनुसंधानम्। तत्प्रधान इति भावः। **नापीति**।

1. Pt. text reads तद्बद्धि for तद्धि।

विकल्पो विशेषज्ञानम् चर्व्यमाणस्य चर्वणामात्रप्राणस्य सुसंवेदनं [स्वसंवेदनम्] स्वानुभवस्तत्सिद्धात् [१]अप्रकाशतयेति शेषः। न खलु रसप्रतीतिकाले विभावादिकारणानां स्फुटोऽवभासः उभयात्मकं निर्विकल्पकत्वाभावात् सविकल्पक, सविकल्पकत्वाभावात्[२] निर्विकल्पकमुपचर्यतामिति भावः। पूर्ववदकार्यत्वात् ज्ञाप्यत्ववत् काव्यार्थतत्वज्ञानसंपत्तिः। श्रीस्तद्योगात् श्रीमत्वम्। [३]सम्प्रदायपूर्वकत्वादाचार्यत्वम्। पादा इत्यनेन गुरुगौरवसूचनं एतेन विभावादिसंभिन्नानुद्रिक्तांशरत्याद्यंशक संवित्प्रकाशानन्दचमत्कारस्वरूपत्वं [४]रसस्योक्तं भवति।

इह ये केचिद्विभावादीनामन्यतमेनैव निष्पत्तिः यत्र तु त्रयाणां सद्भावस्तत्रोद्भटतया प्रतीतस्य रसस्यैव रसनवीजना अन्यस्त्वं [अन्येषां] वर्जनीयसंनिधितया-अवस्थितिरिति मन्यन्ते तान् प्रत्याह-**व्याघ्रादय इति**।

**अयमाशयः**। यदि विभावमात्रस्योपनिबन्धे रसप्रतीतिस्तदा भयानकरसस्य निष्पत्तये व्याघ्रादिमात्रस्योपनिबन्धे कथं तत्प्रतीतिः स्यात्। ते हि भीरूणां भयमिव [५]वीराणामुत्साहमपूर्वदर्शिनां विस्मयं व्याघ्रादिभयार्थानां [६]च क्रोधं जनयन्तीत्यनेकरसविभावः। एतमश्रुपातादय इत्यादि व्याख्येयम्। अतश्च विभावानां पृथक् पृथक् रसनिष्पादकत्वे अनैकान्तिकदोषापातः। [७]यदाहुः—[८]पक्षविपक्षसपक्षवृत्तिरनैकान्तिक इति।

इह हि येन विभावेन केवलेन भयानको निर्वाह्यः तस्य पक्षे वीरादावपि संभवः। विभावादीनां मिलितानां तु कारणत्वेन कश्चिद्दोष इत्यभिप्रेत्योक्तम्—"विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति। एवञ्च मिलिता विभावादयः प्रतिनियतमेव रसं बोधयितुमीशत इत्याशयः। यत्क्वचित्तु यस्यैकस्य द्वयोर्वा सद्भावस्तत्र यद्यन्यतमाक्षेप.......तदा न दोष इत्याह **वियदित्यादि** मधुकराणां कोकिलानां च[९] कूजितं

१. Pt. text reads अपरिस्फुटविभावादिप्रकाशतया for अप्रकाशतया।

२. ,, ,, निर्विकल्पकमुपचर्यतामिति भावः for सविकल्पकं सविकल्पकत्वाभान्निर्विकल्पकमुपचर्यतामिति।

३. ,, ,, संप्रदायप्रवर्तकत्वात् for संप्रदायपूर्वकत्वात्।

४. ,, ,, एतस्यैव for रसस्यैव।

५. ,, ,, धीराणां for वीराणाम्।

६. ,, ,, Question tag for च।

७. ,, ,, तदाहुः for यदाहुः।

८. ,, ,, पक्षसपक्षविपक्ष for पक्षविपक्षसपक्ष।

९. Transcript omits च।

तैरिति [१]लक्षणे तृतीया। वर्षास्वपि जम्बुफलास्वादनलम्पटानां कूजितं वर्ण्यत इति न विरोधः। अभिनवाङ्कुरा एव [२]अङ्कानि चिह्नानि येषु एवंभूताः टङ्काः पाषाणदारणप्रायकचोरप्रदेशा यस्यां धरणौ अत्र प्रणतिपरो नायको मुग्धा च परस्परमालम्बन [विभावौ]·····वर्णितस्वरूपं गगनादि तु उद्दीपनं एतन्मात्रसद्भावे [३]सञ्चारिणामेव हि व्यभिचारिभावानामावेगादीनां, अनुभावादीनां रोमाञ्चस्तम्भादीनां सामर्थ्यादाक्षेपः।

परिमृदितेत्यादौ चानुभाविनो निद्राच्छेदननिर्वेदादयः, आलम्बनञ्च माधवः, उद्दीपनं चतुर्गुणश्रवणादि प्रकरणसामर्थ्यादवगम्यते।

**दूरादिति**। चरणानद्यां व्यतिरेकः [चरणानतिव्यतिकरः] संपर्को यस्येति समासः, प्रपञ्चो नानाविधता अत्रोक्तरूपमौत्सुक्यम्। विवलनादिनिश्चयानुभावैः सूचिता व्रीडाहर्षादयो यथासंख्यं व्यभिचारिणः। केवलायामित्यत्र स्फुटतयेति शेषः। साधारणत्वं मुख्यत्वम्। अन्यतमस्यैकस्य द्वयोर्वा अपेक्षया द्वयस्येत्युपलक्षणम् द्वयोरुपादाने एकस्यापेक्षत्वम्।

**[वैवि] शेषानिति**। तस्य सामान्यतो निर्णीतस्य रसस्य [४]विशिष्यत इति विशेषस्तान्। तत्र शृङ्गारो नाम प्रौढतरपरस्परगोत्थसुरतप्रकृतिः [५]रतिः स्थायिभावः। तत्रालम्बनं नायकौ, उद्दीपनं तयोरेव यौवनादि चन्द्रचन्दनकोकिलभ्रमरनिःश्वासदेशकालविशेषादिश्च। अनुभावाः [६]कटाक्षभ्रूक्षेपालिङ्गनचुम्बनादयः।

सञ्चारिणस्त्वाह··········लिः। [[७]अत आह]
एकोनपञ्चाशदमी च भावा युक्त्या निबद्धा [८]परितोषयन्ति।
आलस्यमौग्र्यं मरणं जुगुप्सा तस्याश्रयाद्वैतविरुद्धनिष्ठम्॥ इति
एकोनपञ्चाशद्भावाश्च व्यभिचारिणः, स्थायिनोऽष्टौ।

---

१. इत्थंभूतलक्षणे। पा० सू०
२. Pt. text reads प्रज्ञाविशिष्टानि for अङ्कानि चिह्नानि।
३. ,, ,, अवहित्थ वेगादीनां रोमाञ्चस्तम्भादीनां for सञ्चारिणामेव हि व्यभिचारिणां, आवेगादीनां, अनुभावादीनां रोमाञ्चस्तम्भादीनामाक्षेपः।
४. ,, ,, त इति विशेषास्तान् for विशेष्यत इति विशेषास्ताः।
५. ,, ,, इति for रतिः।
६. ,, ,, कटाक्षभुजाक्षेप for कटाक्षभ्रूक्षेप।
७. Transcript omits अत आह।
८. Pt. text reads परिपोषयन्ति for परितोषयन्ति।

[वाग्वेदादि] वाग्वैचित्र्यादि चेष्टावैकृतश्चित्तविकारो हासः। तत्कृती रसो हास्यः। तत्रालम्बनं विकृतवेषादिकः कोऽपि। उद्दीपनं [1]चेष्टादि। अनुभावा अक्षिसङ्कोचनवदनस्मेरतादयः। सञ्चारिणोऽवहित्थाग्लानिमूर्च्छादयः।

करुणो बन्धुविभवनाशजनितशोकप्रकृतिः। अत्रालम्बनं बन्धुमरणादिः। उद्दीपनं तद्दाहादि। अनुभावो भूमिपतनरोदनोरस्ताडनादिः। सञ्चारिणो ग्लानिनिर्वेदमूर्च्छादयः।

[2]एवमादिरसस्य च यथा सान्द्रानन्दायतत्वमेव तथोपपादितम**स्मत्साहित्यदर्पणे**। रौद्रोऽपकारिणि प्रौढक्रोधप्रकृतिः। तत्रालम्बनमपकारी। उद्दीपनमपकारादि। अनुभावोंऽशस्फोटनतर्जनादिः। सञ्चारिणो गर्वादयः।

दान-दया-धर्म-परिपोषको वीरः। तत्रालम्बनं द्विजद्विषदार्तपुणचतीर्थादिः। अनुभावाः सर्वस्वत्यागादयः क्रूरसंचारजनितभयस्थायिभावस्त्रीनीचप्रकृतिर्भयानकः। तत्रालम्बनं क्रूरसत्वादि, उद्दीपनं तच्चेष्टादि अनुभावो नयनमीलनगात्रसंकोचनपलायनादिः। सञ्चारिणो जडताग्लानिमूर्च्छादयः। विकृति पूतिमांसादि जुगुप्साप्रकृतिः बीभत्सः। तत्रालम्बनं पूतिमांसादिः उद्दीपनं तत्रैव कृमिपातादि। अनुभावास्तु उत्तमप्रकृतिगता कार्यान्तरव्यासङ्गादयः। अधमगताश्च मुखविकृतत्वनिष्ठीवनादयः, व्यभिचारिणो निर्वेदापस्मारजाड्यादयः। लोकोत्तरस्तु प्रतिभासको विस्मयप्रकृतिरद्भुतः, तत्रालम्बनं दिव्यपुंसादिः अनुभावाः साधुवादशिरोधूननादयः। संचारिणः [3]हर्षोत्साह धृत्यादयः। एते शृङ्गारादयः सात्विकबहुलगीतवाद्यादिपूर्विकाभिनयेन पुरावृत्तानुकारो नाट्यम्। तदाश्रया रसा महर्षिणाऽष्टौ कण्ठोक्ताः। [4]श्रव्येतु महाकाव्यादौ शान्तोऽपि नवमोऽस्ति रस [5]इत्याशयः। तस्य सम्यक् नाट्यपोषकत्वाभावात्। यदाह धनिकः "पुष्टिर्नाट्येषु नैतस्य" इति। तत्र संभोगः संयुक्तनायकविषयः। विप्रलम्भश्च विप्रयुक्तविषयः। संयोगवियोगौ [6]परस्परायत्तनायकरूपौ, तेन दूतीप्रेषणादेः [7]संभोगविषयत्वं ईर्ष्यामानादिश्च विप्रलम्भविषयत्वमविरुद्धम्।

---

१. Pt. text reads तच्चेष्टादि for चेष्टादि।
२. ,, ,, एवमादिरसस्य च यथोपपादित for एवमादिरसस्य च यथा सान्द्रानयतत्वमेव यथोपपादितमस्मत्साहित्यदर्पणे।
३. ,, ,, हर्षधृत्युत्साह for हर्षोत्साह घृत्यादयः।
४. ,, ,, अन्ये तु for श्रव्ये तु।
५. ,, ,, इत्याहुः for इत्याशयः।
६. ,, ,, परस्परो यत्र नापन्नतारूपौ for परस्परायत्तनायकरूपौ
७. ,, ,, संयोगविषयत्वं for संभोगविषयत्वम्।

**शून्यमिति**। अत्र नम्रशब्दः अन्तर्भूतणिजर्थः तेनालोकननमनयोरेककर्तृकतया पूर्वकाले क्त्वाप्रत्ययः। इह च [1]नायकावलम्बनविभावौ, शून्यवासगृहादिरुद्दीपनविभावः, अनुभावा बालागतादिविलोकनादयः। नायकगताश्च व्याजनिद्रादयः। निद्राया हि व्याजत्वमुद्धतभयानकव्यभिचारित्वम् व्यभिचारिणश्च नियामकागता विलोकनेन शंका उत्थानेन चपलता उत्थानस्य गनैमनित्रासः [?] चिरं निर्णयेन [चुम्बनेन] सुप्तं न वेति सन्देहप्रभवो वितर्कः। नम्रमित्यनेन निभ्रानिश्चयज्ञानेन हर्षः। परिचुम्बनेन औत्सुक्यम्। आलोकनेन च पतनामुखनमनेन च लज्जानिष्ठैव नायकगता च व्याजनिद्राभयेन धृतिः चिरचुम्बनेनौत्सुक्यम् हर्षश्च। एभिश्च साधारण्येन प्रतीतैः साधारण्येनाभिव्यक्तैः सहृदयैरिति भावः। शृङ्गाररसरूपता लभ्यते। एवं वक्ष्यमाणोदाहरणेष्वपि भावादिविवेको बोद्धव्यः। अत्र द्वयोरनुरागयोरनुरागोद्रेकेऽपि नायिकाया औत्सुक्यमधिकम् नायकौत्सुक्यातिरेके पुनरुदाहरति **त्वमिति**। वीटिका ग्रन्थिः। सस्मितमुखी सैव नायिका नेत्रस्य उत्सवो विकासादिः, अपरो विप्रलम्भः। अभिलाषः सङ्गमप्रागभावः। विरह एकस्य द्वयोरपि गुर्वादिवशात्सङ्गमोपरोधः। ईर्ष्या अन्यासक्ते कान्ते नायिकाकोपः। एवं चोपलक्षणम्। तेन प्रणयमानोऽपि संगृह्यते। यदुक्तं मम **साहित्यदर्पणे**—

द्वयोः प्रणयमानः स्यात् प्रमोदेऽपि [सु] महत्यपि।
प्रेम्णः कुटिलगामित्वात् कोपो यः कारणं विना॥ इति सा० द० ३-१९८
प्रवासो भिन्नदेशता। शापो मुन्यादिक्रोधयन्त्रणः।

तस्य चापवादत्वात् पूर्वभेदान्तरसंभवेऽप्यनेनैव व्यपदेशः। **प्रेमार्द्रा इति**। दर्शनादिगत भावव्यञ्जकः कश्चन विशेषः। प्रेम्णः तत्पूर्वको वशीकारः। प्रणयः रहस्यसंवेदनम् परिचयः नयस्तत् भयत्वमिव। निशान्तं गृहम्, वृत्तः प्रवृत्तः, निवर्तनस्य पार्श्वपरिवर्तनस्य व्यतिकरः।............पुण्यं यस्या एवेति प्रकरणादित्यर्थः। सख्यं सौहार्द्रम्। तेन उपदेशोऽर्थात्सखीनां अश्रुभिःपर्यस्तनेत्रोत्पलेति संबन्धः। **प्रस्थानमिति**। अत्र प्रवासस्य भाविरूपो भेदः। यदुक्तं मयैव-**भावीभवन्भूत इति** त्रिधा स्यात्तत्र कार्यज इति। सा० द० ३-२०८ कार्याज्जातः प्रवासभेदः।

**त्वामिति**। अत्र तवाकृतिलिखनं [लेखनं] कथंचिन्निर्वाह्य पादपतनारम्भे त्वद्विनामलासस्मरणविह्वलान्तःकरण [विपुलान्तःकरण].... .......[3]प्रवाहरूपता-

---

१. Pt. text reads नायकः आलम्बनविभावः for नायकावालम्बनविभावौ।

२. Transcript omits नायिका।

३. Pt. text reads प्रवाहरूपतामाप तैर्वाच्यैः for प्रवाहरूपतामापन्नैर्बाष्पैः।

मापन्नैर्बाष्पैः समन्ताद्दर्शनविघातः क्रियत इति सर्वशास्त्रविदां **श्रीमद्वाचस्पतिमिश्राणां** व्याख्यालिखनमपि [[1]व्याख्यालेखनमपि] गूढतिमित्वन्येषा [गूढमितित्व] एतावत् प[वि]द्यमानसंधानेनैवेदं रसध्वन्युदाहरणम् प्रबन्धपर्यालोचने तु विप्रलम्भसञ्चारी उन्माद एव ।

**आकुञ्चेति** । थादिति [थूदिति] प्रहारशब्दानुकरणम् । अत्र विष्ठरशर्मा [विष्णुशर्मा] आलम्बनम् । प्रहारदानादि[2]रुद्दीपनम् । कपोलोछ्वसनदृष्टिसङ्कोचादयो हर्षावहित्थाश्चानुभावव्यभिचारिणः । ... ... अपि सामर्थ्यात् नट्याः । [सामर्थ्याल्लभ्याः] एवमन्यत्रापि ।

**ग्रीवेति** । पश्चादर्थं ............ति उच्छ्राय उच्छूनता । पिण्डी जंघोर्ध्वभागः । रङ्कश्चिरदुर्लभताहारः । करङ्को अस्थिशेषम् । शिरःस्थपुटम् [4]विकटगतीविभावाः ।

न तिरोधीयते स्थायी, तैरसौ पुष्यते परम् इति रतिलक्षणम् । यथा **मम साहित्यदर्पणे** (३.१७६) रतिर्मनोनुकूलेऽर्थे मनसः प्रवणायितमिति । इष्टं च [इयंच] मदनाविष्टस्त्रीपुरुषनिष्ठैव श्रृङ्गारस्थायी ।

**व्यभिचारिण इति** ।
विशेषादाभिमुख्येन चरन्तो व्यभिचारिणः ।
स्थायिन्युन्मग्ननिर्मग्नाः कल्लोला इव वारिधौ ।।

तत्र तत्त्वज्ञानापदीर्ष्यादिश्चिन्ताग्लानिदैन्यादिकृत् स्वावमाननं निर्वेदः ।[5]
सदृशदर्शनादिजो क्रमानुमानादिकृत् वासनोद्बोधः[6] स्मृतिः । यथा मम......

[7]भ्रमयति समवायं स्मेरवक्त्रारविन्द—
स्फुटदधरपुटं तं दर्शित .... विभेदम् ।
[8]अलसचलितभावं किञ्चिदाङ्गं ।
[9]केवलयति [कवलयति च] मनो मे पक्ष्मलाक्ष्याः कटाक्षः ।।

---

१. Pt. text reads व्याख्यानमपि for व्याख्यालेखनमपि ।
२. Pt. text omits प्रहारादिरुद्दीपनम् ।
३. Pt. text reads अनुक्ता मपि ।
४. ,, ,, विकटगतविभावः । for विकटगतीविभावाः ।
५. Transcribed copy omits स्वक् सूत्रवृत्या भावानांमन्येषामनुगामकः ।
६. Pt. text reads वासनोद्वेगः for वासनोद्बोधः ।
७. ,, ,, स्नपयति for भ्रमयति ।
८. ,, ,, स्फुटदधरपुटान्त for स्फुटदधरपुटं तं ।
९. ,, ,, अलसचलितमौर्वी for अलसचलितभावं ।

हर्षशोकप्रहारेणोत्कण्ठादिजोऽस्थानहसितगीतप्रलपितादिकृच्चित्तसंमोह उन्मादः।
यथा ममैव—किं कन्दर्पमुखं विधाय मधुपैः रेतैःनवैः पल्लवैः।
श्येतिश्च्युतशरैः करोषि जगतां जेतुं प्रयासं स्वधा[1]।
निद्रातुं शयितुं प्रयातुमथवा स्थातुं प्रभुः को भवेत्।
एकोऽसौ कलकण्ठकण्ठकुहरे जागर्ति चेत्पञ्चमः॥

एवमन्येषामपि व्यभिचारिणां कारणकार्यस्वरूपोदाहरणानि लोकप्रसिद्ध्या मदीयसाहित्यदर्पणोक्तरीत्या बोद्धव्यानि। भावाश्चित्तवृत्तयो नाम। उद्देशतः त्रयस्त्रिंशदुक्ताः। अन्या अपि चित्तवृत्तयः एषामेव विभावानुभावरूपतया [3]एष्वेवान्तर्भवन्तीत्याशयः। किञ्च रत्यादीनामपि स्थायित्वाभावे सञ्चारित्वमेव। तल्लक्षणायोगात्। तथा हि—

हासक्रोधादयः शृङ्गारवीरादौ [4]लवणोदकप्राये स्थायिनि……[5]प्राया उन्मग्ननिमग्ना दर्श्यन्ते [दृश्यन्ते]। **अयमेव विशेषः**। निर्वेदादयः पुनः व्यभिचारिण एव न कदाचन स्थायिनो भवितुमर्हन्ति। ये स्वभूत [?] विक्रमोर्वशीय मदीयचन्द्रकलानाटिकाप्रभृतिषु तु उन्मानादादे [उन्मादादे] ग्रन्थव्यापित्वं। न[6] पात्रे धैर्यम्। तदुक्तं **मम साहित्यदर्पणे**—

उन्मादेन तु स्थायिपत्रे न स्थैर्यमेति।

**यदिति**। यच्च निर्वेदस्यापि भावतामवलम्ब्य ग्रन्थकृता अवान्तररसस्वीकारः तत् **प्राचीनस्य कस्यचिदाचार्यस्यानुरोधेनैव**। निर्वेदस्य [8]स्वावमाननरूपत्वात्। [9]विषयालम्बनप्रत्ययमात्रताद्बाह्यसञ्चार्येव भवितुमर्हन्ति। शान्तस्तु शमस्थायिभावो नवमो भवितुमर्हति। [10]तदुक्तं तत्रैव—(३-१८०)।

---

१. Pr. text reads वृथा for स्वधा।
२. See Sahityadarpana तृतीय परिच्छेद।
३. Pr. text reads एष्वेवान्तर्भवितुमर्हति for एष्वन्तर्भवन्ति।
४. ,, ,, लवणाकर इव for लवणोदकप्राये स्थायिनि।
५. ,, ,, Transc. copy omits बुद्बुदप्राया।
६. नतूपात्तस्थैर्यम्।
७. ,, ,, निर्वेदस्थायिभावतां for निर्वेदस्यापि भावतां।
८. ,, ,, स्वावमाननमात्रत्वात् for रूपत्वात्।
९. ,, ,, विषयालम्बनमात्रत्वाच्च for विषयालंबनप्रत्ययमात्रत्वात्।
१०. ,, ,, तदुक्तं for यदुक्तम्।

शमो निरीहावस्थायां आत्मनि विश्रामजं सुखमिति । यदुक्तं कृष्णद्वैपायनेन—

यच्च कामसुखं लोके यच्च किञ्चित् महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

स्त्रैणं स्त्रीसमूहः । संप्रत्युद्देशक्रमप्राप्तान् भावादीन् रूपयति **रतिरिति**। अञ्जितो मुख्यतया यद्यपि काव्यार्थस्याखण्डबुद्धिवेद्यतया आस्वाददशायां गुणप्रधानभावाभासो नास्ति । तथाप्यास्वादोत्तरकालं विवेचकैरयमनुभूयते । **तदुक्तं तत्रैव साहित्यदर्पणे**[1]—"यथा मरीचखण्डादेरेकीभावेऽपि पानके तत्रैकं कस्यचित् क्वापि तथा संचारिणो रस" इति । योग्यता माहात्म्यम् । [2]अस्याश्च देवताविषयरतेरपि स्वीकारेणाहङ्काररहितत्वे शान्तेऽन्तर्भावः ।

## रसाभासाः

**क्वचित्** स्थायिनामपि प्रकरणपर्यालोचनया [3]परस्परं रागप्रकर्षपरिपोषराहित्यभावत्वैव । यदाह—

"हरस्तु किञ्चित् परिवृत्त धैर्य" इत्यादौ । अत्र च[4] विषयानौचित्यं त्रिषया[5]……भासः । अनौचित्यप्रवृत्तित्वं च भरतादिप्रणीतश्रृङ्गारादिरसलक्षणात्मकदेशमात्रयोगे बोद्धव्यम् । तच्चाधममात्रगतत्वे तिर्यगादिनिष्ठत्वे बहुनायकनिष्ठत्वे[6] ।

**हास्याभास इत्यादि** । **स्तुम इत्यादि** । अत्रैकस्या नायिकाया बहुविषया रतिः प्रतीयते [7]तत्राह **अत्रेति** । स्तुव [स्तुम] इत्यनेनानुगतं यं विना न रस इति रमणव्यापारोपादानम् । आदिशब्दात् कः प्राणान् विलेभ इत्यादिनानुगतं यं

---

१. Sahityadarpana reads : "यथा मरीचखण्डादेरेकीभावं प्रपाणके । उद्रेक : कस्यचित् क्वापि तथा संचारिणो रसे ॥ (३-२६१-२)
२. Pt. text, omits अस्याश्च ।
३. ,, reads परस्परानुराग for परस्परं राग ।
४. omits च ।
५. Blank sems nonethlecss.
६. Pt. text reads वा श्रृङ्गाराभासः हासस्य aftor बहुनायकनिष्ठत्वे ।
७. ,, तदाह for तत्राह ।

[1]मृगयस इत्याद्यावन्वेषणादि व्यापारोपादानं कतृ तस्या अनेककामुकविषयमतिना[2] संव्यनक्ति। तथा हि। यदि ह्यत्र बहुव्यापारोपादानं एक विषयं स्यात् यच्छब्दस्यैकदैव निर्देशः स्यात्। तदत्र स्तुत्यादिमुख्यार्थेन बाधितु सोपहासोत्प्रासका[3]……… नेनोचितप्रवृत्तस्य श्रृङ्गारस्याभासतामभिव्यनक्ति पर्यन्ते हास्यं परिपोषयन्तीति भावः। [4]**एकेति**। स्मेरं ईषद्विकसितं अत्र प्रकरणवशात् कस्यचित् दुर्भगस्यार्थे निर्विरित्यमानायां [निवर्त्यमानायां] नायिकायां चिन्ताख्यो भावाभासः।

मात्मस्येति [**भावस्येति**] **तथेति**। नान्नादावपि भावशान्त्यादिरिति **भावः**। **वीररभसेर्ष्या न** [?] उत्साहवशेनालङ्कारसमुद्गमः प्रकर्षः।

**भावेति**। भावा व्यभिचारास्तेषां प्रशान्त्यादयश्चेति भावः। **राजेति**। **यथा विवाहप्रवृत्तो भृत्यो राज्ञाप्यनुगम्यमानो लोकैराबद्धमुखे सुखतया**[5] इत्यर्थः।

इदञ्च व्यासवाल्मीकिकालिदासप्रभृति[6] रगुंफजीवित[7] [ रत्युपजीवित] **भूतस्यासंलक्ष्यक्रमरूपस्य रसादेस्तत्वं**[8] परकीयग्रन्थव्याख्याप्रसङ्गेन स्तोकस्तोकमुक्तं अल्पेनापि प्रसत्तेन [प्रसङ्गेण] सन्दर्भेण सशेषविशेषमवगन्तुकामा **मदीयसाहित्यदर्पणमवलोकन्तु**[9] विद्वांसः।

## शब्दशक्त्युद्भवध्वनिः

संप्रति क्रमप्राप्तं विवक्षितान्यपरवाच्यभेदस्य लक्ष्यक्रमव्यंग्यस्यार्थवादपूर्वकं विभागमाह **अन्विति**। [10]अनुस्वानमनुरणनं तत्सदृशः, अत एव संलक्ष्यः,

---

१. Pt. text reads यं मृग for यं मृगयस।

२. ,, reads ०० विषयमभिलाषं for विषयमतिना।

३. Transcript omits कुर।

४. Pt. text राकेति for एका० this ms. might have followed the reading "एका सुधाकरमुखी।

५. Pt. text adds प्रेक्षत after सुखतया।

६. ,, adds महाकविभिः after ०० प्रभृति

७. ,, reads ००० रनुगम्यजीवित for रत्युपजीवित।

८. ,, reads रसादेस्तावं for रसादेस्तत्वम्।

९. See S. D. ३—२६७.

१०. Pt. text reads अनुस्वानेऽनुरणनं for अनुस्वानमनुरणनम्।

[1]क्रमप्रतीतेः पौर्वापर्यस्य तदुभयशक्त्या उत्थानमुखार्थात्। [3]व्यङ्ग्यस्य [श्च] यत्रेति विग्रहः। वृत्तावपि शब्दशक्तिमूलं प्रतीतिप्रधानबीजं यस्य तथाविधोऽनुरणनरूपो यत्रेति समासः। **एवमन्ययोरपि**। शब्दात् शक्तेः। अनु [अर्थ] शक्तेस्तु [4]साचिव्यमात्रमिति भावः। **प्रधानत्वेनेति**। गुणीभूतव्यङ्ग्यनिरासः। शब्दस्य च ............ रुद्भवः, अर्थात् व्यङ्ग्यस्य यत्र काव्यभेद इति समासः। **अलङ्कारमिति**। अलङ्करणमलङ्कारः। स न विद्यते यत्रेति समासः।

**उल्लास्येति**। अत्र कम्पिण [किं रण] नृपतिः [5]ग्रन्थकृद्व र्णनीयः। तेनाभिधेयोऽयमर्थः। येन देवेन राज्ञा कालो विप्रसंहर्ता [विश्वसंहर्ता]। करवालः खड्गः स एव महदम्बु धाराजलं वहतीति महाम्बुवाहः, तदुल्लासि इत्यादिरिति केचिद्व्याचक्षते। अन्ये तु करवाल एव महाम्बुवाहो मेघ इति रूपकसमासं स्वीकुर्वन्ति।

नन्वेवमेकदेशविवर्तिरूपकमिति द्वितीयार्थस्य स्फुटाभावात् कथमिहोपमाध्वनिरिति चेत् न तथाहि यत्र "जल [द] भुजगजं विषमित्यादौ गरलत्वारोपणं विना जलदभुजगयोः सादृश्यमस्फुटं तत्रैव [6]रूपकाङ्गीकारो न्याय्य इति। इह तु खड्गमेघयोः सादृश्यं व्यक्ततया परसाचिव्य[7]मनपेक्ष्य स्वमात्रविश्रान्तमिति न रूपान्तरापेक्षं यश्चात्र कालकरं कुजरश्मिं वालमभिनवमम्बुवाहमुल्लासस्य [?] देवेन मेघाधिकारिणा धाराकारैर्जलैरित्यादि द्वितीयोऽर्थःस्फुरति [8]तस्यानुभवसिद्धस्याशक्यापह्नुवस्याभिधया नियन्त्रणात् व्यञ्जनयैव बोद्धुमुचितस्यासंबद्धत्वं मा प्रासाङ्क्षीदिति [9]मेघाधिकारिणोरुपमानोपमेयभावः कल्प्यत इति भावः।

तिग्मः शत्रुषु रुचिरो मित्रेषु प्रतापो यस्य विधुराणां शत्रूणां, मधुरा मनोहरा लीला चेष्टा यस्य मतिमानयोस्तत्वेन वृत्तिर्यस्य, प्रतिपदं पक्षाणां सहायानामग्रणीः। तत्रास्यार्थस्य राजस्तुतेः प्रकृतस्याभिधेयत्वम्। द्वितीयार्थश्चातिग्मरुचिः सूर्योऽपि

---

१. Transcript reads क्रमप्रतीतेः पौर्वापर्यस्य for क्रमः पौर्वापर्यम्।
२. ,, omits तथाविध व्यंग्यस्य स्थितिर्यत्र ध्वनौ काव्यभेद स शब्दार्थस्य।
३. Pt. text reads व्यंग्यो यत्रेति for व्यंग्यश्च यत्रेति।
४. ,, ,, साचिव्यमिति for साचिव्यमात्रमिति।
५. Transcript reads ग्रथनीयः for ग्रन्थकृत् वर्णनीयः।
६. ,, reads रूपकालङ्कारो for रूपकाङ्गीकारो।
७. ,, reads मपेक्ष्य for मनपेक्ष्य।
८ Pt. text reads तस्याप्तु भवसिद्धस्य for तस्यानुभवसिद्धस्य।
९. ,, adds फणि before मेघाधिकारिणो।

प्रतापरहितः, विधुश्चन्द्रोऽप्यनिशाकरः। मधुर्वसन्तोऽपि लीलारहितः। मतिमानपि अतत्वेऽवस्तुनि वृत्तिर्यस्य। प्रतिपत् तिथ्यादिरपि पक्षस्य नाग्रणीरिति विरोधाभासो व्यङ्ग्यः।

**अत्रेति**। तिग्मरुचिरप्रताप इत्यादिपदेषु खण्डीकृतेषु योऽसौ विरोधाभासः स्फुरति तेषां पदानां व्यङ्ग्य इत्यर्थः। समितः सङ्ग्रामात्। प्राप्तैरुत्कर्षैरमितः अपरिमितः असन्ता अनन्तः, अहितः शत्रुः, मानमितं तेन हीनः कथं तेन युक्तः, हितेन रहितः कथं तेन युक्त इति विरोधः।

**अत्रापीति**। विरोधस्याभासप्रतीतिः। कुपतिमपि कलत्रवल्लभमित्यादौ त्वपिशब्दबलात् झटिति विरुद्धार्थ एव प्रतिभासते। अन्यथा हि शब्दस्य निरर्थकतापत्तेः। पृथिवीपतित्वाद्यर्थस्य तु प्रकरणादिपर्यालोचनयैव बोध्यत्वाद्विरोधालंकारस्येव प्रतिभास इति विरोधालङ्कारस्य व्यङ्ग्यत्वमेव। एवं पदस्य समंगामंमस्य त्व [?] विच्छित्याशयेनोदाहरणद्वयम् [?]।

[1]उपादानमुपकरणं चित्रं नानाप्रकारमालेख्यं च। कला शक्तिः। अत्र शिल्पिभ्य उत्कर्षप्रतीतेर्व्यतिरेकालङ्कारः।

ननूक्तं व्यङ्ग्यस्य प्राधान्ये ध्वनिरिति। इह च व्यङ्ग्यानामलङ्काराणां प्राधान्येऽलङ्कारमेव [अलंकार्यमेव] तत्कृतोऽलङ्कारत्वा·· ····[2]। यदाहु :—

काव्यशोभाकरान् धर्मानलङ्कारान् पवक्ष्यते [प्रचक्षते]। इति अत आह **अलङ्कार्यस्यापीति**। श्रमणः पाखण्डविशेषः। न च रसाद्युत्कर्षकत्वमात्रेणालङ्कारता, वाच्यवाचकालङ्करणरसाद्युत्कर्षत्व एव हि तथाङ्गीकारात्। रसाद्यपेक्षया पुनरप्राधान्येऽपि न काचित् क्षतिरि [त्यु] क्तमेव।

[3]वस्तुध्वनीनुदाहरति **यत्विति**।

पथिक नात्र प्रस्तरोऽस्ति मनाक् प्रस्तरस्थले ग्रामे।
उन्नतपयोधरं प्रेक्ष्य [यदि वससि तद्वस]॥

---

१. Pt. text reads उपादानमुपकरणत्व for उपादानमुपकरणम्।

२. Blank।

३. Pt text omits वस्तुध्वनीनुदाहरति यत्विति।

स्तृणादिशय्या, प्रस्तराः पाषाणाः, पयोधरो मेघः, व्यंग्यपक्षे स्रस्तरं शास्त्रं, रत्याद्यनुशासकम्। उन्नतपयोधरां मामित्यर्थः। न चेह प्रस्तरशब्दस्य शास्त्रार्थत्वे नोपमाध्वनिः सादृश्यस्याविवक्षितत्वात्। रहस्यसङ्गोपनार्थ एव हि द्व्यर्थशब्दप्रयोगः।

शनिग्रहः। अशनिः कुलिशम्। अत्रैकयोरेकविषयाभावात् न विरोधालङ्कारः। उदारो महान् अनुगता दारा यस्येत्यनुदारः। अत्र तु विरोधालङ्कार एव चकारस्य [चमत्कारस्य] समुच्चयार्थत्वेनापि गतार्थत्वान्न विरोधालंकारस्य वाच्यत्वम्। अत्रेति। विरुद्धौ शन्यशनी।

## अर्थशक्त्युद्भवध्वनिः

अर्थशक्त्या उद्भवः [१]अर्थात् व्यङ्ग्यस्य यत्र काव्ये, तेन कविना उम्मितस्य काव्ये पूरितस्य निबद्धस्येति यावत्। न खलु कवेस्तन्निबद्धस्येव रागाद्याविष्टिता, तेन प्रौढोक्तेस्तन्निबद्धस्य वक्तृप्रौढोक्तिरधिकं सहृदयचमत्कारिणीति पृथगुक्ता। यत्र यतः अलस अप्रसिद्ध। [?]

अलसशिरोमणिधूर्तानामाग्रिमः[३] पुत्रि धनसमृद्धिमयः।
इति [४]नलिनी नताङ्गी प्रफुल्लविलोचना जाता॥

नताङ्गीति वेश्याया विशेषणम्। अत्रेति। वाच्येन वस्तुना मयैवोपभोग्य इति वस्तु व्यज्यत इति संबन्धः। अहं तु ध्वन्या [अहं त्वदन्या or अहं तु धन्या] उक्तप्रकाररागावेशदायि वल्लभे[५] त्वयीति भावः।

दर्पेति। गन्धगजो मत्तगजः निम्नमर्तािशिष्टम्। [६]कषाया रक्ता। अत्र[७] त्वुपमानेन हि यस्य कस्यचित् सदृशं वस्तु तस्य कार्यं करोति। तेन कालीकटाक्षतया संभाव्यमानः कृपाणः दृष्ट इति

---

१. Pt. text reads अर्थ व्यंग्यस्य यत्र काव्येति न कविना for अर्थात् व्यंग्यस्य यत्र काव्ये, तेन कविना उम्भितस्य।

२. Pt text reads निरुद्धस्येति for निबद्धस्येति यावत्।

३. Pt. text reads धूर्तानामग्रणीः for धूर्तानामग्रिमः।

४. ,, reads भणितेन for नलिनी।

५. ,, reads वल्लभतयेति for वल्लभे त्वयि।

६. ,, omits कषाया रक्ता।

७. ,, omits त्वुपमानेन।

संभावनोत्थानादुत्प्रेक्षैवेति **चण्डिदासपण्डितः** । **एतच्चिन्त्यम्** । तथाहि कालोकटाक्षदर्शिनां भयक्षयो भवति । तत्कृपाणदर्शिनामपि वैरिणामुपमाया युगवत्वात् [युक्तत्वाव] । इह च साधारण-धर्मबिम्बप्रतिबिम्बभावो नोत्प्रेक्षायां घटत इति वादिनं **श्रीधर-सांधिविग्रहिकमाक्षिपन्तो** यदात्मनो विरचितं ।

कण्ठे लुठत् काचन यक्षसूत्रं

संवीक्ष्यमाणः शितरामधैर्यः ।

श्यामोपभासे तडितोपगूढ

सशब्दलाकः [लसद्बलाकः] किमु वारिवाहः ।। इत्यादिश्लोकं दर्शयति **तदप्यविचारिताभिधानम्** । साधारणधर्मस्य बिम्बप्रति-बिम्बतया निर्देशे उत्प्रेक्षाबीजस्याध्यवसायस्यासंभवात् विषयनि-गरणेनाभेदप्रतिपत्तिविषयिणो ह्यध्यवसायः स च कुतो भिन्नसा-धारणधर्मतया निर्दिष्टः स्यात् ।

अध्यवसायाभावे च किमुशब्दमात्रस्य नोत्प्रेक्षाद्योतकत्वं किं च किमु शब्दप्रयोगो न घटत इत्यलं बहुना ।

**गाढेति** । **विरोधालङ्कारेणेति** विरोधमूलेन कार्यकारणयोः पौर्वापर्यविपर्यय-रूपेणातिशयोक्तयलङ्कारेणेत्यर्थः । तथाहि स्वाधारनिदर्शनं [स्वाधरदर्शनं] कारणम् । वैरिस्त्रीणामोष्ठानाञ्च कान्तदन्तक्षतमोचनं कार्यभूतं समकालतया निर्दिष्टम् । **अधरेति** । अधरो निर्दष्टश्च, शत्रवो व्यापादिताश्चेति तुल्यमेककालं[१] योगो ययोस्तौ तुल्ययोगिनौ । तयोर्भावस्तुल्ययोगितेति व्युत्पत्या समुच्चयालङ्कारो व्यज्यत इति भावः । न तु प्रकृताप्रकृतसमानगुणक्रियासंबन्धरूपा [२]तुल्ययोगिता । ममेति निदर्शनरूपः । क्रूरपिशाचैर्ममाधरं बलिरूपं [विलरूपं] प्राप्य अन्यान् धनान् सुखिनः करोत्विति बुध्या मुहुर्निजाधरं दष्टवानिति तस्य राज्ञो भूतिरुत्प्रेक्ष्यते [३]संभाव्यते ।

---

१. Pt. text reads तुल्यमेव कालं for तुल्यमेककालम् ।

२. ,, reads योगिता for तुल्ययोगिता ।

३. Pt. text omits संभाव्यते ।

ततश्चात्र समुच्चयोत्प्रेक्षयोरेकत्रायान्न [त्रात्र] प्रवेशलक्षणः सङ्करः। प्रथमः प्रधानं फलिनम्तरम्। केशेष्विति। केशेषु बलात्कारेण तेन समरे जयश्रीर्गृहीता यथा कन्दराभिर्विबुधा [धुरा] स्तस्य च दृढं कण्ठे संस्थापिताः।

तस्य विधुरा इति संबन्धः। कण्ठे संनिवेशे इह चोत्प्रेक्षाव्यञ्जकत्वम् समासोक्ते तु कंदरा स्वस्त्रीव्यवहारसमारोपं विना उद्दीपितमदना इवेत्युत्प्रेक्षाया असंभवात्।......

तच्चेदं व्यस्तकव्यञ्जत्वे उदाहरणं इति प्रकारान्तरेण व्याचष्टे। काव्यहेतुः काव्यलिङ्गं, तस्य हि समक्षं जयश्रीग्रहणात्। भीती [भीत्या] शत्रवः पलायिता इत्येव स्वरूपं दृढं कण्ठे स्थापिता इति भागश्चापह्नुतेर्व्यञ्जकः। किञ्चात्रोत्प्रेक्षापह्नुतिसन्देहे न [हैः] सह काव्यलिङ्गमेकव्यञ्जकानुप्रविष्टम्।

गाढालिङ्गनरभसोद्यते दयिते [१]लघुमुपसरति।
मनस्विनीनां मानः पीडनभीत इव हृदयात्॥

लघु शीघ्रं। [२]अत्र चालिगनोद्यममात्रेणैव वाच्यस्य सिद्धे प्रत्यालिगनप्रसादहसितादीनां न तदङ्गत्वम्।

मा ब्राह्मणमिव हसन्ती कविवदनाम्बुरुहबद्धविनिवेशा।
दर्शयति तु ? बल [भुव] नमण्डलमन्यदेव जयति सा वाणी॥
ये लङ्कागिरिमेखलायां स्खलिता संभोगखिन्नोवशी [खिन्नरगी]
स्फारोत्फुल्लफलावलीकवलना [ने] प्राप्ता दरिद्रत्वम्।
त इदानी मलयानिला विरहिणीनिःश्वाससंसर्गिणो [संपर्किणिः]
जाता झटिति शिशुत्वेऽपि बहलास्तारुण्यपूर्णा इव॥
सखि विरचय्यमानस्य मम धीरत्वेनाश्वासम्।
प्रियदर्शनविश्रृङ्खलक्षणे सहसा तेनापसृतम्॥

अत्र विभावनोत्प्रेक्षयोः संसृष्टिः।

आर्द्रार्द्रं करजलक्षितैस्तव लोचनयोर्मम दत्तः।
रक्तांशुकं प्रसादः कोपेन पुनरिमे नाक्रान्ते॥

---

१. Pt. text reads लघुसमपसरति for लघुमुपसरति।

२. ,, reads तत्र च for अत्र च।

३. Pt. text reads रदनखक्षतैः for करजलक्षितैः।

[1]तत्रार्द्रार्द्रकरजरदनक्षतैर्मम लोचनयोरिति संबन्धः ।

रक्तोंऽशुरेव रक्तांशुकम् । अत्रेति । उत्तरालङ्कारेण ।

मम लोचने कोपेन रक्ते अपि तु रक्तांशुकवती इत्यपह्नुत्यलंकार सविवेनेति विशेषः [ध्वनिरिति शेषः]

महिलासहस्रभृते तव हृदये सुभग साऽमान्ती ।

दिवसमनन्य [कर्मा अङ्गं तनु कमपि तनयति] ।।*

मन्मथेति पदद्वयञ्च । तारका नक्षत्राणि अक्षिणी कनीनिका च । श्यामा रात्रिर्नायिका च ।[1] अत्र रात्रिनायिकयोरुपमानोपमेयभावो व्यङ्ग्यः । श्यामादिपदस्थाने रजन्यादिपदनिक्षेपेऽपि, क सानन्दनं न करोत्युक्ते कान्तासादृश्यं.........च्छब्दार्थयोरप्यत्र शक्तिदार्ढ्यमिति **चण्डिदासपण्डिताः** ।

**श्रीधरसांधिविग्रहिकस्त्वाह**—यत्र एकदेशस्याशब्दशक्तिरेकदेशान्तरस्था च वक्रौचित्यादिसहकृतार्थशक्तिर्व्यङ्ग्यं प्रति व्याप्रियते तत्रोभयशक्तिमूलत्वम् । तेनात्र निशानायिकयोरुद्दीपनालम्बनविभावयोः औपम्यपर्यन्तप्रतीतिः श्लिष्टं, शब्दमाहात्म्यात् विप्रलब्धस्येति चिन्त्येति सानन्दमित्यादिना यो जगदपि सानन्दं करोति स मामेव तथा न करोतीत्यदि स्वाभिप्रायस्याभिव्यक्तिरर्थशक्तिमाहात्म्यात् ।

तेन पंथिअण एत्थेत्यादिशब्दशक्तिमूलोदाहरणादस्य भेदः । अहं तत्र श्यामाशब्देन वाच्याया रजन्याः नायिकासामान्यप्रतीतेः प्रयोजनकेऽतन्त्रेत्यादौ तावकेत्यादौ च विशेषणद्वयचन्द्रतारकापदयोः परिवृत्यसहत्वं दीपितमन्मथेतिविशेषणेन सर्वमपि पदं परिवृत्य सह अत्रोभयशक्तिमूलत्वं शब्दस्य परिवृत्तिसहत्वमित्ययमेव हि सर्वत्र शब्दार्थशक्तिमूलस्य व्यवस्थापनम् । अत एवेत्यस्य बहुपदनिष्ठत्वेनैव संभवाभिप्रायेण ग्रन्थकृ तु [ग्रन्थकृत्] कृत्यपदनिष्ठत्वं नास्तीति वक्ष्यति ।

पंथि अण एत्थेत्यादौ तु सहयोः सत्यशब्दयोरेव व्यञ्जकत्वमिति शब्दशक्तिमूलत्वं, व्यञ्जकस्य द्विशब्दनिष्ठत्वेऽपि पदसमु-

---

१. ,, reads तवार्द्रार्द्र for तत्रार्द्रार्द्र ।

*Four lines are left blank in the transcript beyond this.

दायनिष्ठत्वाभिप्रायेण वाक्यनिष्ठत्वं, उल्लास्यकालकरवाल इत्यादौ वाचकशब्दादिपदानां राज-मेघगर्जितरूपशक्तिविशेषाभिधायकत्वेन परिवृत्यसहत्वमेवेत्यभिप्रायवान् **ग्रन्थकृत्** शब्दमात्रशक्तिमूलत्वे तदुदाहृतवान् ।

**अष्टादशेति** । अविवक्षितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । विवक्षितान्यपरवाच्योऽसंलक्ष्यक्रमव्यंग्यत्वेन च, व्यंग्यत्वशब्दार्थोभयशक्तिमूलत्वेन च पञ्चदशेति । नायकश्च नायिका च तौ नायकौ तयोः, अन्येषां रसानां भावादीनाञ्च ।

**वाक्य इति** । व्यर्थ [द्व्युत्थ] उभयशक्तिमूलः । एवं व्यंग्यभेदादेव व्यञ्जक भेदः । अन्ये उक्ताः सप्तदश भेदाः । **वाच्येति** । वाच्यादुत्पन्नो व्यङ्ग्यो वर्तते यस्यां सा वाचकव्यङ्ग्या । **अयमाशयः** । एकमेव पदं तथा व्यङ्ग्यं बोधयति, पदान्तराणां तु सहकारिमात्रेति ।

**अस्येति** । अत्र पद्ये एकैकवाक्येषु एकैकपदानामेव मुख्यार्थे बाधितया लाक्षणिकता ।

खलव्यवहारा दृश्यन्ते दारुणा यद्यपि तथापि वीराणाम् ।
हृदयवयस्यबहुमता न खलु व्यवसाया विमुह्यन्ति ॥

हृदयमेव वयस्यः सखा, तेन बहुमता परिगृहीताः । अत्राचेतनस्य व्यवसायस्य विमोहो मुख्यार्थे बाधितः स्थगितत्वं नयति । अत्र व्यामोहस्थगनयोः सामान्यविशेष-भावादत्यन्ततिरस्कृतवाच्यो ध्वनिः, सर्वावयवगतः कोऽप्यतिशयो नारण्यां [नायिक्यां] तत्सौन्दर्यकान्तिरुज्वला पृथक् पृथगवयवाश्रिता । अत्र रसप्रतीते विभावादिसामग्रीसाध्यत्वेऽपि तद्विशेषवोत्तधिकानां [बोधितानां] तदादिपदाना-मेव प्राधान्यम् ।

धृतिः धैर्यं वच्चधानदृढं [ ? ] स्वीकुरु भीतं भयचेष्टायुक्तमाननं यस्याः सा तथा तेनाति··········भसेनार्थश्च प्रतीयमान उपमायां पर्यवस्यति । भुक्तिर्भोगः मुक्तिर्निःश्रेयसं इतरव्यापारव्यासंगपरित्यागसुखञ्च ।एकान्ततः परमार्थस्वरूपं सङ्केतस्थानञ्च । सदागमः सच्छास्त्रं, सतः पुरुषस्यागमनञ्च । **अत्र** परमार्थस्य द्वितीयानुरूपरहस्यसङ्गोपनार्थमेवाभिधानात् नोपमाध्वनिः किन्तु शब्दशक्तिमूलो वस्तुध्वनिरेवायम् ।

[१]अर्थशक्त्युद्भवभेदेषु उदाहरति **सायमिति** । [२]न विद्यते मीलनव्यति-करः संपर्को यस्य तदमीलन [व्यति] करं यथा स्यात्तथा असितुं स्थातुमित्यर्थः ।

**तदप्राप्तीति** । मुक्तिं गुरुजनयंतु [??] त्रणामा [त्राणाय] मोक्षं च "न तस्य प्राणा उत्क्रामन्ति", अत्रैव समवलीयन्त इति श्रुतेः, निरुच्छ्वासतया मोक्षेऽपि संबन्धः । अत्र भगवद्वियोगजं दुःखं तदनु ध्यानजं सुखञ्च जन्मसहस्रोपभोग्य सुकृतदुष्कृतफलराशितादात्म्येनाध्यवसितमिति अशेषवय [चय] पदाद्यतिशयोक्ती व्यज्येते [व्यज्यते] । अक्षणोऽन्वयः [अनुत्सवः] अवत्वं ररक्षहेतु [रक्षतु] अव्यसनं मेषाणां [३]असनं यत् तत्र क्षणदा कथमक्षणदेति विरोधालङ्कारः । सोंगमुत्थानहेतुर्य-स्येति विग्रहः ।

तव वल्लभस्य प्रभाते आस्तादधरोम्लानकमल [दलम्] ।
इति नववधु [धूः] श्रुत्वा करोति वदनं महीसंमुखम् ॥

अवनतं लज्जयेति भावः । मिलद्विपदं "मिलाण कमलदलो" इति समस्तपदं ।

[४]रात्रिषु चन्द्रधवलासु ललितमास्फाल्य [५]यश्चायम् ।
एकच्छत्रमेव करोतीति [६]त्रिभुवनराज्यं विजृम्भमाणः ॥

तेभ्यः कामिभ्यो योऽसौ स्मरभ्यादेश [स्मरस्यापदेशो] कश्चित् पराङ्मुख इति । तेभ्य इत्यत्र निर्धारणे पंचमी । पक्षस्यानुमानविरुद्धत्वात् ।

[७]आज्ञाप्रधानो राज्ञः कर्म राज्यान्तेन भव............... [राज्यं त्रिभुवनं] पद्यार्थव्यञ्जकता । अदाने कुटिले सकलपुरुषसिहस्तत्वात्, वयसि यौवने, अवस्था विमर्दोत्पदाद्याः [?] कार्यमाणोऽपि पुनः सन्तापकदम्बितेन [कदर्थितेन] हृदयेन

---

१. Pt. text reads अर्थशक्तिमूलेषु for अर्थशक्तयुद्भवभेदेषु ।
२. ,, reads न विद्यते मिलन व्यतिकरः for न विद्यते मीलन व्यतिकरः ।
३. ,, [illegible]नं for असनम् ।
४. ,, reads रात्रीषु for रात्रिषु ।
५. ,, reads यश्चापं for यश्चायम् ।
६. Trasncript reads त्रिभुवनं ।
७. Pt. text reads आज्ञाराधनो for आज्ञाप्रधानो ।

[1]स्तनभरवयस्येन विशुद्धजातिर्न च तमस्याहारः। विशुद्धाभिजलाहे आश्रयार्थ [2]कदाचिच्चलति स ............।

समुग्धः श्यामलांगो धम्मिल्लः कलितललितनिजदेहः।
[3]तस्यानुग्धादवनं गृहीत्वा स्मरः सुरतसङ्गरे जयति ॥ [4]धम्मिल्ल एव स्मर इति रूपकम्।

[5]नवपूर्णिमामृगाङ्कस्य सुभग [कः] त्वमसि भण मम साद्यं [सत्यं]
का सौभाग्यसमग्रा प्रदोषरजनीतखाद्य [नीव तवाद्य]

अत्र नवपदेन नवमत्वं पूर्णिमापदेन [6]नायिकान्तरसंसर्गः। ख्यातेः कलङ्कत्वम्, प्रदोषपदेन प्रकृष्टदोषत्वं, रजनीपदेन रागित्वम्।

सखि निधुवनसमरंगपाली सख्या निबिडतया।
हारो निवारित एव तद्धियमानस्तः [उच्छियमाणस्ततः] [कथंरमितम्]॥

अङ्गपाली आलिङ्गन विशेष एव सखी तद्धियमानो [तदुच्छ्रियमाणो] आर्धधीमदत् [7][?] [8]अन्योन्यांगस्पर्शविघ्नदायित्वादिति भावः। निबिडा दृढा विश्वस्तः। अत्र कथमिति प्रश्नेन पूर्वरतादधिकमनोहरत्वसूचनाद्व्यतिरेकः।

विशृङ्खलां त्वां सखि दृष्टवा कूटेन तरलतरदृष्टिं।

द्वारस्पर्शव्याजेन आत्मा गुरुवा इति। पातयित्वा विभिन्नकूटो घटः
ज्योत्स्नया मधुरसेन च विभी [वितीर्ण] तारुण्योत्सुकमनाः सा।
वृद्धापि नवोढेव परवधूरहह रति [परिहरति] तव हृदयम्॥

---

१. Pt. text reads स्तनभरवश्येन for स्तनभरवयस्येन
२. ,, reads पदाच्चलति सः for कदाचिच्चलति सः।
३. ,, reads तस्याः स्कन्धाद्बलं for तस्यानुग्धादवनं।
४. Transcript omits कलितेत्यादि स्परविशेषण, स्कन्धादिति स्कन्धशब्देन शोभातिशयो व्यज्यते।
५. Transcript omits स्कन्धोंऽश.सेनानिवेशश्च। बलं सामर्थ्यं सैन्यं च after रूपकम्।
६. Pt. text adds नायकानामपि after पूर्णिमापदेन।
७. ,, reads अभिभवतु
८. ,, reads अन्योन्यांगत्वस्यात्र for अन्योन्यांगस्पर्श·······।

पूर्वमर्थान्तरसंक्रमितवाच्यादीनां सामर्थ्यलक्षणप्रस्तावम्।

प्रवन्धो महावाक्यम् [महाकाव्यम्] अर्थशक्तिभूर्द्वादशप्रकारः।

कालधर्मो मरणम्। अस्य च श्लोकस्य पद्यान्तरसाचिवस्येव महाकाव्यतेति स्पष्टार्थं महाकाव्यांतरमुदाहरति।

**आदित्य इति**। स्नेहं [1]जीवनोपायानुसारणबीजम्। मुहूर्तः संध्याकालः बहुविघ्नभूताद्यावेशसंभावसादायित्वात् [संभावि साधारणत्वात्]। अत्र स्वतः-संभविवस्तुना वस्तु व्यज्यते। लक्षन्तो लक्षात्। तद्यथा रघुवंशे—

"समपूजयतयात्यन्त श्रवेत्यादिना। उभयसिद्धिस्वभावरापन्तविद्यन्ते [?] न तुल्ययोगितया काव्यलिङ्गेन वा रघूराघवयोर्व्यतिरेकालङ्कारः प्रतीयते। किन्तु कुमारसंभवे हिमगिरिवर्णने [2]प्रौढोक्त्यप्रौढोक्तिसिद्धालङ्कारससृष्ट्या हिमिगिरि[रे] रितरोत्कर्षः प्रतीयते। अर्थशक्तिभूरित्युपलक्षणम्। शब्दशक्त्युद्भवोऽपि क्वचित् प्रवन्धव्यंग्यो दृश्यते। यथा माघकाव्ये शिशुपालभूतोक्तौ [दूतोक्तौ] [3]संधौ वाच्ये वर्णमात्ररूपो विग्रहः उपमाध्वनिरपि तथाविधः संभाव्यते। पदैकदेशः प्रकृत्यादिः। [4]तस्य च यद्यपि केवलस्य न वाचकत्वं तथापि वाचकसमुदाय-प्रविष्टस्य रसादिषु तत्तदतिशयाधायकत्वं।

[5]रतिकेलिकृतनिरसनकरकिसलयरुद्धनयनयुगलस्य।
रुद्रस्य तृतीयनयनं [6]पार्वतीविचुम्बितं जयति॥

**अत्रेति**। शोभतेमातरित्यदि [भातीत्यादि] प्रकृतिरूपप्रकृतेर्व्यञ्जकत्वे उदाहरति। **सायमिति** [पथिपथीति] किरतीति किरणस्य वर्तमानविहितत्वात् साध्यत्वम्। तेन कार्यस्य झटित्युत्पन्नत्वद्योतनेन तिङ्युयो [तिङ्कृद्भ्यां] रसोत्कर्षकत्वं किञ्चैवमत्र कार्यकारणपौर्वापर्यव्यत्ययरूपातिशयोक्त्यलङ्कारस्य

---

१. Pt. text reads जीवनोपायास [क?] रणबीजं for जीवनोपायानुसरण-बीजम्।
२. ,, reads प्रौढोक्तिसिद्ध for प्रौढोक्त्यप्रौढोक्तिसिद्ध।
३. ,, reads संध्यावाच्ये for संधौ वाच्ये।
४. ,, reads तस्यापि केवलस्य for तस्य च यद्यपि केवलस्य।
५. ,, reads रतिकेलिहृतनिवसन for रतिकेलिकृतनिरसन०
६. ,, reads पार्वतीपरिचुम्बितं for पार्वतीविचुम्बितम्।

व्यंग्यत्वं । एवं च न केवलं रसध्वनेः [१]पदांशवयंग्यत्वं, किन्तु वस्त्वलंकारयोरपि इति **ग्रन्थकृदभिप्रायः** सूचितो भवति ।

ग्रामरुहास्मि ग्रामे वसामि नगरस्थितिं न जानामि । नागरिकाणां पतीन् हरामि यातवामि [भवामि] सा भवामि ।। ग्रामरुहा ग्रामजाता यस्या नारदव्यञ्जकते [अनादरव्यंजकते] त्यर्थः । **आसीदिति** वर्तमान एव क्षत्त्रियकुमारोऽतीतकालयामर्ष-प्रकर्षद्योतकता ।

तेषां गुणग्रहणानां तासामुत्कण्ठानां तस्य प्रेम्णः ।
तेषां भणितानां सुन्दर ईदृशं जातमवसानम् ।।

एकत्वमनेकैरपि हेतुभिः अन्यथाभावमप्राप्तित्वादिति भावः ।

अञ्चिता प्रादुष्कृता, किं मन्यसे विहरिष्यामीत्यर्थे किं मन्ये विहरिष्यस इति प्रहायर्थे परुषे [प्रहासार्थेपुरुष] व्यत्ययः । प्रहासे मन्योपपदे मन्यतेरुत्तम [पा० १-४-१०६] इत्यनुशासनात् । प्रहासः सोपहासोत्थत्प्रयासः दुर्वलतया विशिष्टाः सम्मता इत्यर्थः । नीतिशास्त्रेषु दण्डेषु [दण्डस्य] चतुर्थोपायत्वेन गणितत्वात् । रीतिः प्रकारः सा यस्य अल्पसुरतरत्वात् [अल्पाच्तरत्वात्] पूर्व-निपाते प्राप्तेऽप्यर्चितत्वद्योतनाय [उचितद्योतनाय] पराक्रमस्य पूर्वनिपातफलप्राप्तौ सत्यां क्रियासमाप्तिरपवर्ग इति न वंशिकथितमिति प्रकरणसंगतिः । अनुकम्पायां प्रवृत्तिर्यस्येति विग्रहः परीति पुनः शब्दोऽत्र द्वितीयचाव [पाद] मात्रे नत्वागामिति द्वितीयचारे [न त्वं गतवानिति द्वितीयपादे] जडयति स्तंभयति प्रशब्देलं [रोऽत्र] ध्वंसक्रियापकर्षः । तेन माधवस्य महामोहातिशयसूत्रणद्वारा रागदार्ढ्यव्यञ्जकः ।

**कृतञ्चेति** । चादीनां स्वातन्त्र्येणार्थबोधनविरहात् । पादावयवगताः ।

रामोऽसाविति सप्तभिः षड्जादिभिःपदादिभिः, **असाविति** सर्वनाम्ना साक्षात क्रियमाण तदीयलोकत्तरप्रसिद्धिर्व्यज्यते । वचनं बहुवचनं गुणैरित्येकत्र प्रातिपदिकं बहुवचनं चोत्कर्षव्यञ्जकत्वं । **न त्वदिति** । त्वद्भाग्यविपर्ययात् [२]**न मदिति** मद्भाग्यविपर्ययात् **अस्मदिति** । सकलस्वकुलपरिग्रहः । **अन्येत्यादि** । [अथेत्यादि अत्र भाग्यादित्यनुक्तावपि भाग्यविपर्ययादिति वचनेनास्माकं भाग्येन पूर्वमभावः । [३]तेन भवतः पूर्वं नेदृशी बुद्धिरासीत् । इदानीमेव भाग्यस्यान्यथा भाववचनेन तदिदानीमीदृशीबुद्धिरभूदिति भावः ।

१. Pt. text reads पदातिशयव्यंग्यत्वं for पदांशव्यंग्यत्वम् ।

२. ,, ,, omits न ।

३. ,, ,, omits from तेन भवतः to भावः ।

तरुमणिति (**तरुणिमनीति**)। कलामुपचयं भ्रुवोरग्रे कर्तरि। अर्थान्मदनधनुः मदनधनुषः समीपे [१]पठति। मदनधनुर्नैपुणशिक्षां कुर्वतीत्यर्थः। स्वरूपस्य विशेषत्व-प्रत्ययादिमनिच् प्रत्ययस्य श्रुतिकटुत्वपरिहारेण सहृदयसंगतित्वम्। अव्ययीभाव-समासस्य च मदनधनुषो गुणीभावेन भ्रूलताग्रस्य जगद्वशीकरणसाम्राज्यं कर्मभूता-धारस्यचाधारैकदेशवृत्तित्वपरिहारेण सकलाधारव्यावृत्तिकमप्यास्वादप्रकर्षं द्योतयति । **स एवेति**। [२]व्यञ्जकःव्यङ्ग्यव्यञ्जनभावनियामकः।

**एवमिति**। उक्तप्रकारेणान्येषां प्रकृत्यादीनां कर्मप्रवचनीयादीनाञ्च नायिकादिष्वित्यनेन केवलमर्थशक्त्युद्भवद्वादशभेदवत् अवान्तरमहावाक्यव्यंग्योऽसौ रसादिरपि तु सर्वेष्वेव दृश्यश्रव्यादिप्रबन्धेषु मुख्यतया व्यङ्ग्योऽयं अन्यथा काव्यत्वहानेरिति भावः। पूर्वगणिताभ्यां पदवाक्यवृत्तित्वेन द्वाभ्यां [३]भेदाभ्यां। तत् तस्माद्धेतोः **एकपञ्चाशदिति**। पूर्वगणिताष्टादशभेदानां मध्ये उभयशक्त्युद्भवो वाक्यमात्रे। अन्ये सप्तदश वाक्ये पदेपीति पञ्चत्रिंशत्। अर्थशक्त्युद्भवा द्वादश प्रबन्धेऽपि इति सप्तचत्वारिंशत्। असंलक्ष्यक्रमव्यङ्ग्यस्य च पदांशादिवृत्तित्वे-नापि चातुर्विध्यमिति **व्याख्याता** दर्शिताः। न [४]त्वेतावन्त एवेति नियमः शब्दशक्त्युद्भवस्यापि [५]प्रबन्धव्यङ्ग्यताया दर्शितत्वात्।

तेषामिति। अयमर्थः। प्रथमभेदस्य सजातीयविजातीयेन सह सङ्करसंसृष्टिभ्यां संमिश्रणे चत्वारो भेदाः। द्वितीयभेदेन सहैवं चत्वार इत्यष्टौ, तृतीयेन सहैवं चत्वार इत्यष्टौ, तृतीयेन सहैवं द्वादश। एवं प्रत्येकं चत्वार इत्यन्तिमभेदपर्यन्तमिश्रणे एकस्य भेदस्य चतुरधिकं भेदशतद्वयमिति। एकपञ्चाशतो भेदानां संभूय। भेदेति [वेदेति] वेदाश्चत्वारः वियत् शून्यं, चन्द्रः एकश्च, एवञ्चाङ्कविन्यासे वैलोम्यं संख्या-शास्त्रप्रसिद्धत्वात्। अयुतमेकं शतचतुष्ठयं चत्वार ध्वनिभेदा इत्यर्थः। शुद्धभेदैरेकप-ञ्चाशतसह च। इति शराः पञ्च। इषवः पञ्च। युगं चतुष्टयम्। खं शून्यं, इन्दु-रेकश्च भेदाः संभवन्ति। द्वितीयभेदस्य तु शतद्वयमेव प्रथमभेदेन सहास्य [६]भेदस्या-योगगणनासंभवात्। तथाहि योऽसौ प्रथमभेदेन सङ्करसंसृष्टिभ्यां द्वितीयभेदेन सह

---

१. Pt. text reads शिक्षा कुर्वतीत्यर्थः for पठति।

२. ,, reads व्यञ्जकव्यंग्यतावनियामकः for व्यञ्जकव्यङ्ग्यभावनियामकः।

३. Pt. text reads पदाभ्यां for भेदाभ्यां।

४. Pt. text reads न त्वभावन्त for नत्वेतावन्त।

५. ,, omits प्रबन्धव्यङ्ग्यतायाः।

६. Pt. text योग्यता न संभवति for अयोगगणनासंभवात्।

भेदः सहैव, द्वितीयभेदस्य प्रथमभेदेन सहेति व्यवस्था। एवं हि द्वितीयतृतीयादिष्वन्तिमभेदपर्यन्तं क्रमेण चत्वारश्चत्वार [श्चत्वारतया] पातनीया [भावनीया] इति संभूय एषां व्यङ्ग्यानां एकपञ्चाशत्। सिन्धु-गगन-शिखि-शत (शर) संख्या एका (ता) एव भेदाः। सिन्धुश्चत्वारः, गगनं शून्यं, [1]शिखी त्रयः, शराः पञ्च,। एवं पञ्चसहस्राणि शतत्रयश्चत्वारश्च भेदाः शुद्धभेदैः सह [2]चैकपञ्चाशदधिका इति।

अस्य **ग्रन्थकारस्यायमभिप्रायः**। एषु एकपञ्चाशत् [3]व्यङ्ग्यभेदेषु मध्ये प्रथमस्य द्वितीयस्यान्तिमस्य वा यस्य प्रथमबुद्धिविषयत्वान्तस्य [त्वं तस्य] प्रथमगणनीयत्वमिति। सर्वेषां चतुरधिकशतद्वयपरिमिता भेदा किमर्थं क्रमेण चत्वारश्चत्वारः पातनीया इति।

[4]क्षणाभ्यागवदिव रजायते सुभगं किमपि याचितारोदिति-पश्चाद्भागबहुभी गृहेऽनुनीयताम्।

क्षण उत्सवः। हे सुभग देवर जायया किमपि भणितेति संबन्धः। **अत्रेति**। अनुनीयतामिति पदं वक्त्रादिवैशिष्ट्ये झटिति प्रतीतेरनुनयनमात्रे विश्रान्तेः। स्वार्थे बाधितमुपभोगलक्षणे अनुनयस्यैवार्थान्तरे पर्यवस्यतीति अर्थान्तरसङ्क्रमितवाच्यो ध्वनिः। उत वक्त्रादिवैशिष्ट्यार्थसंधानात्। स्वार्थे बाधितमुपयुज्यत इत्येव व्यनक्तीति द्वयोरेकतरनिश्चायसाधकाभावात् सन्देहसङ्कर इत्यर्थः।

**स्निग्धेति**। वेल्लनं चलनं। पयोदसुहृदां मयूराणामानन्देन केका ध्वनयः। कला मधुराः स्फुटाः **अत्रेति**। नभसो लेपनस्यासंभवात् व्यापनं, सुहृदामित्यत्र चामित्रत्वासंभवात् परिपोषकारित्वं लक्ष्यत इति द्वयोर्भिन्नाश्रयत्वात् संसृष्टिः।

**रामोस्मीति**। न खलु रामः सर्वं सहत एवेति। प्रसिद्धेरभावात्, मुख्यार्थे बाधिते दुःखैः पौत्रत्वादिविशेषो [?] लक्ष्यत इत्यर्थान्तरसङ्क्रमितवाच्यत्वम्।

---

१. ,, reads सखी for शिखी।

२. ,, omits एक।

३. Pt. tex: omits व्यङ्ग्य।

४. क्षणप्राघुणिका देवर जायया सुभग किमपि ते भणिता।
रोदिति गृहपश्चाद्भागवलभी गृहेऽनुनीयतां वराकी॥

**अनुग्राह्येति**। रामपदद्योत्ये तह्र्येवंविधायामप्यवस्थायां जीवितं धारयन्तं मां धिगित्यादावनुग्राह्ये. अङ्गिन्य [?] ग्राहकत्वमङ्गभावः। **रामपदलक्षणेति**। रामोऽस्मीत्यत्र हि उक्तप्रकारेणार्थान्तिरसङ्क्रमितवाच्यो ध्वनिः। धैर्य-निर्वेदस्मृति-शङ्का-वेदोन्मादपरिप्रष्टो [पुष्टो] विप्रलम्भाख्यरसध्वने एकव्यञ्जकेऽर्थप्रविष्टौ [अनु-प्रविष्टो] ऽन्यदेव दिङ्मात्रेणोदाहृतेषु। इतरत् संसृष्टिं संकीर्णं च प्रधानभूत-व्यङ्ग्य भेदावान्तरम्।

इति काव्यप्रकाशे [काव्यप्रकाशदर्पणे] चतुर्थ उल्लासः।

**अथ पञ्चम उल्लासः**

## गुणीभूतव्यङ्ग्यप्रभेदाः

वृत्तिकृदुल्लाससङ्गतिमाह **एवमिति** । निर्णीते भेदप्रभेददर्शनेन निश्चयं प्रापिते । [1]अङ्गमुत्कर्षकारि वाच्यसिद्धेरङ्गं कारणम् । अस्फुटं सहृदयानामपि क्लेशप्रत्येद्यम् [ग्यम्] । [2]एवञ्च गूढव्यङ्ग्याद्भेदः । सन्दिग्धप्राधान्यं तुल्यप्राधान्यञ्च । काक्वाक्षिप्तं वाच्यवत् स्फुटीकृतं [3]अत्यंवद्वाच्याद्यर्थेष्वचमत्कारं व्यङ्ग्यमिति प्रतिपदान्वयः । भिदा विशेषाः । अस्माभिः पूर्वं [4]न दृष्टा इदानीं स्मृताः ।

आवहामि करोमि । अत्र [5]जीवन् अनुभवामीति जीवित इति वचनात् [6]बाधितस्वार्थः अश्लाघ्यजीवनत्वं लक्षयति । तदतिशयश्च वाच्यवत् सर्वजनगोचर इत्यगूढः । अस्य च व्यङ्ग्यस्य वाच्यादधिकचारुत्वाभावात् [7]गुणीभूतत्वम् । एवं [8]तुल्यप्राधान्येष्वपि ज्ञेयम् ।

[9]...वीति । वदनसंसर्गरूपस्य चुम्बनस्य [10]प्रकृतेः संभवात् संसर्गमात्रं लक्ष्यते ।

**अत्रेति** । [11]श्रीरामचन्द्रेण वक्त्रा केनापीति सोत्प्रा[छ्वा]सवचनेन [सोल्लास-वचनेन] मयेत्या.........त्मनः प्रदारनं [प्रकटनं] न युक्तमिति [12]गुणीभूतस्य

---

१. Pt. text reads अङ्गमप्रधानं for अङ्गमुत्कर्षकारि ।
२. ,, ,, इति हि for एवञ्च ।
३. ,, ,, अत्यन्त for अत्यंवत् । [ ? ]
४. ,, ,, उक्ता for न दृष्टाः ।
५. ,, ,, जीवन् न भवामि for जीवन् अनुभवामि ।
६. ,, ,, बाधिश्चार्थः for बाधितस्वार्थः ।
७. ,, ,, गुणीभूतं for गुणीभूतत्वम् ।
८. ,, ,, तुल्यप्रधानादिष्वपि for तुल्यप्रधानेष्वपि ।
९. ,, ,, वीति ।
१०. ,, ,, प्रकृतेरसंभवात् for प्रकृतेःसंभवात् ।
११. ,, ,, अत्र श्रीरामो वक्ता for श्रीरामचन्द्रेण वक्त्रा ।
१२. ,, ,, गुणीभूतव्यंग्यत्वम् । तस्यापीति पाठे तस्य तथाविधस्य ममेत्यर्थः । तथास्य श्लोकस्य ध्वनित्वमित्याशयः which the transcript omits.

रसादेरङ्गमुत्कर्षकारि रसादिवाच्यस्यार्थ रशाषारू········ पं[ ?? ] व्यंग्यं करुणस्य प्रकृतस्य परिपोषकत्वादङ्गत्वं शृङ्गारस्येति भावः। इदं हि महाभारते समरच्छिन्नं भूस्रवसो [भूरिस्रवसो] हस्तमादाय तत्कान्ताया विलपनम्। भावो देवतादिविषयरतिः। प्रेयसामित्यनादरे षष्ठी। लान्ति गृह्णन्ति। तत्तस्मादखिला विपदो विध्वस्ता इति सम्बन्ध भावाभासः शत्रुभक्तेः कृतिमत्वात्। अर्थ [ ? ] शब्देति स्थाने पादेति पाठे पाठशब्दो भाववाचकः। भावस्य गर्भत्राख्यशान्तिः [ ? ] अभियुक्तः आविष्टः।

**पश्येत्कश्चिदिति**। अत्र यं पुरुषं ब्रवीति तस्मात् सम गोप्यः कश्चिद्व्यापार आक्षिप्यते। तेनात्र शङ्का।············[1]त्यादौ काकुबलेन रागानुविद्धासूया। [2]का त्वरेति। [3]आवेगविश्रृंखलस्थानरूपा धृतिः। अयि कुमारीति स्मृतिः। हस्तालम्बमिना [मित्यादिना] तदङ्गस्यौत्सुक्यान्नावि········ फलावच [4]यः श्रमः, [5]कातर्यप्रकटनाद्दैन्यं हहहाव्युत्क्रम [6]इति विशेषेण कथमेवं मया कुमार्या क्रियत इति [7]इति बोधो मयीति यावत्। य·· ··नीतिमार्गानु सत्यादेरर्थनिर्धारण मतिरिति। क्वासि यासीति तस्य तद्गतरागातिरेकबोधार्थं किञ्चित् कुतश्चिन्मिथ्यागमनमालोक्यौत्सुक्यम्।

**रसवदादीति**। अयं स रसनेत्यत्र कैलासालयेत्यत्र च रसवदलङ्कारः। अत्युच्चा इत्यादिषु षट्सु क्रमेण प्रेय-ऊर्जस्वि-समाहित-भावोदयाभावस [ब]न्धिभावशवला द्याख्याः [व्याख्याताः] षडलङ्काराः। उक्तानि प्राचीनैरिति शेषः।[8] एषाञ्च[9] गुणीभूतरसादीनां स्वव्यञ्जक·····[10] वाच्यवाचकोपस्कृतानामङ्गिनो रसस्याभिव्यञ्जकवाच्यवाचकोपस्कारद्वारेण उपकुर्वतामलङ्कारव्यपदेशः।

१. Pt. tex omits त्यादौ काकुबलेन रागानुविद्धासूया।
२. ,, ,, त्वरेति for का त्वरेति।
३. ,, ,, आवेगविश्रृंखलार्थस्थानरूपा for आवेगविश्रृंखल स्थानरूपा।
४. ,, ,, Question tag for यः।
५. ,, ,, कातर्यप्रकटनं दैन्यं for कातर्यप्रकटनाद्दैन्यम्।
६. ,, ,, व्युत्क्रमविशेषणं for व्युत्क्रम इति विशेषेण।
७. Pt. text reads इति बोधोऽयमिति for इति बोधो मयीति।
८. ,, ,, षट्प्राचीनैरुक्ताः for षडलङ्काशः, उक्तानिप्राचीनैरितिशेषः
९. ,, ,, omits च।
१०. ,, ,, reads वाच्यत्वात् चमत्कारोपस्कृतामलङ्काख्यपदेशः for वाच्यवाचकोपस्कृतानामङ्गिनो रसस्याभिव्यञ्जकवाच्यवाचकोपस्कारद्वारेण उपकुर्वतामलंकारव्यपदेशः।

ननु ध्वनिगुणीभूतव्यङ्ग्यानां ध्वनिमिश्रणस्य पृथग्वक्ष्यमाणत्वात् शुद्धाना-मेवोदाहरणमुचितम् [1]। अयं स रशनेत्यादौ तु करुणादि संभेद इत्याह-**यद्यपीति**। सुप्रभेदैः सजातीयभेदैः। अयं स इत्यादौ करुणादेस्तत्प्राधान्येऽपि संभोगशृङ्गारादि-द्वारेणैवास्वादप्रकर्ष इति तेनैव गुणीभूतेन व्यवहारो न्याय्यः। यच्चैवंभूतानामपि मिश्रीभावस्थलेऽप्युदाहरणम्। तस्मिन् [मि] श्री भावदर्शनमात्रफलमिति।

अथ [2]वाच्यस्याङ्गभूतमनुरणनरूपं शब्दशक्तिमूलञ्च क्रमेणोदाहरति **जनेति**। जनस्थानं नगरग्रामादि, दण्डकारण्यं च, कनकं प्रति मृगतृष्णा निष्फलाशा, कनकमृगे तृष्णा च, वै निश्चितं [3]देहि, प्रबन्ध [प्रयच्छ] विदेहजा सीता, अलं व्यर्थं, क.भर्तुः कुत्सितस्वामिनो [4]यद्वचनं प्रतिपादनं तस्य परिपाटीषु परम्परासु अलम्। काभर्तुः दारुणस्य वदनानां मुखानां[5]परिपाट्यां पंक्तौ इषुघटना [6]शस्त्रसंयोगश्च, कुशलवेति शुद्धं .वसु धनं यस्य एवंभूतौ कुशलवौ सुतौ यस्याः सा सीता च। उपमानोपमेयभावः सादृश्यं वाच्यतामन्वयोपपादकतां। वाच्याङ्ग-मिति पाठे तु [7]वाच्यं वाच्यार्थः, तदङ्गतां [8]सत्ववाच्यायां [9]असंबन्धे सम्बन्धरूपाया अतिशयोक्तेरङ्गतां। अत्र [10]रामत्वमित्यवसेऽपि शब्दशक्तेरेव प्रतीयमानं रामतादात्म्यं वचनेनाविष्कृतमिति गोपनकृतचारुतानि वा स्यात्। गुणीभूतव्यङ्ग्यत्व-मिति भावः।

**आगत्येति**। विसंष्ठुलं बिल्वमिति। प्रसादयति विकाशयति प्रसन्नां करोति च, पादानां रश्मीनां पतनं प्रणामश्च। नायकश्च नायिका च नायकावि [त्येक] शेषः। अध्यारोपेणैव स्थित इति। नक्षत्र [नह्यत्र] रविकमलिनीवर्णनरूपवाच्यार्थवत्

---

१. Pt. text omits उचितम्।
२. „ „ „ वाच्यस्याङ्गभूतमनुरणनरूपम्।
३. „ „ reads देहं प्रतिच्छविः for देहि प्रयच्छ।
४. Pt. text reads यद्वचनं for यद्वदनं।
५. „ „ reads परिपाटी पङ्क्तौ for परिपाट्यां पंक्तौ।
६. „ „ reads शरसंयोगश्च for शस्त्रसंयोगश्च।
७. „ „ reads वाच्यः for वाच्यम्।
८. „ „ omits सत्ववाच्यायाम्।
९. „ „ reads असंवन्धरूपाया अतिशयोक्तेः for असंबन्धे संबन्धरूपाया अतिशयोक्तेः।
१०. „ „ „ ०० मित्यध्यवसायेऽपि for मित्यवसेऽपि।

प्रतीयमानो नायककेलिरूपोऽर्थो वाच्यार्थतां लभते। विशेष्याभिधायिनोः पदयोः [१]उभयाय [यार्थ] प्रतिपादकत्वाभात् प्रसादयतीत्येतावन्मात्रेणैव प्रकृतिनिर्वाहात्। पादशब्दस्य व्यर्थत्वेऽपि नोत्कटा शब्दशक्तिरित्यर्थशक्तिमूलतोक्तिः। निरपेक्षेत्यनेन वाच्यसिध्यङ्गताया भेदश्च रसादौ चानुकरणनरूपस्य [२]गुणाभाव्येतिचार [?] एवेति तस्यागमनं। भ्रमिर्मुखविकारकारी कश्चिदान्तरो धर्मः येन दिग्भ्रमणमिव दृश्यते। प्रलयो नष्टचेष्टता।

अत्र [विष] शब्दवाच्ये जले गरलार्थप्रतीतिं विना जलदभुजगयोस्तादात्म्यरूपणमसङ्गतमिति शब्दशक्तिमूलालङ्कारस्य वाच्यसिध्यङ्गता।

गच्छामीत्यपरित्यक्तधैर्यदर्शनेन किं [४]तृप्तिः [५]किंतूपभोगेनेव **किन्त्विति**। अन्यथाप्ययातिश्चे दनमनुपयोगेनार्थवचनमिति व्यङ्ग्यानि। अत्र यद्यपि व्यङ्ग्ययोरलङ्कारवस्तुरूपतयाप्युदाहरणद्वयं दर्शनमुक्तम्। तथापि प्रकारान्तरेण भेदमाह **एकत्रेति**। एकत्र [६]भ्रमिमरतिमित्यादौ। व्यङ्ग्यं कविनिबद्धवक्तृगतम्।

**आमन्त्रणेत्यादि**। वाच्यं तु [७]कविगतम्। **अदृष्ट इति**। अत्रार्थप्रतीत्यनन्तरं विपर्यालोचनयैव प्रतीतिविषयत्वात्। व्यङ्ग्यं श्लिष्टं [८]झटिति सहृदयानामप्यगोचरं।

**संदेह इति**। वाच्यव्यङ्ग्ययोर्द्वयोरपि[९] प्रधानप्रत्यासत्यविशेषात्।

**ब्राह्मणेत्यदि**। वारणं प्रति [रामं प्रति] परशुरामभूपस्य वाक्यमिदम्। भवतां रक्ष [सां] मित्रं जन्मप्रभृति [१०] निखिलरहस्यवेदी। अत्र वाच्यव्यङ्ग्ययोः सामदण्ड-

---

१. Pt. text reads उभयार्थानुप्रतिपादकत्वाभावात् for उभयार्थप्रतिपादकत्वा……।

२. ,, ,, ,, गुणीभावः व्यभिचार एवेति।

३. ,, ,, omits भ्रमिः।

४. ,, ,, reads फलं for तृप्तिः।

५. ,, ,, ,, किन्नूपभोगेनैव for किन्तूपभोगेनेव।

६. ,, ,, ,, जयं स रशनेत्यादौ for भ्रमिमरतिमित्यादौ।

७. ,, ,, ,, कविर्गावगतं for कविगतम्।

८. ,, ,, omits झटिति।

९. Pt. text reads प्रधानप्रत्यासत्तिविशेषात् for प्रधानप्रत्यासत्यविशेषात्।

१०. ,, ,, ,, अखिल for निखिल।

योस्तुल्यतयैव[1] वैरिमोचनपर्यन्तत्वादप्रस्तुतप्रशंसावत् । परस्परानपेक्षया चमत्कारास्पदत्वात् द्वयोरपि समप्रधान्यम् । [2]पूर्वत्र सन्देहालङ्कारवत् [3]सन्दिग्धवाच्यस्य निषेधस्य सहभावे समकालमेव [4]झटित्यर्थप्रतिभासात् । अत एवात्र [5]विद्यमानमेव मुख्यार्थबाधादेरनुसन्धानमपश्यताम् केषाञ्चित् लक्षणावृत्यङ्गीकारः ।

वाणीरकुञ्जोड्डीन शकुनिकोलाहलं श्रुवण्वन्त्याः ।
गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानि ।।

अत्रौत्सुक्यावेगसंवलितसत्वभावभूतं वाच्यमेव मन्मथोन्मादं प्रत्याययति । **दत्तसङ्केत इत्यादि** । [6]व्यङ्ग्यं तु तटस्थप्रायमेवेति भावः । एतच्च वाच्यसिध्यङ्गतादेरपवादभूतत्वाद्भिन्नं । तेषु हि व्यङ्ग्यस्यापि [7]चारुत्वं संभवति । एषां समनन्तरोक्तगुणीभूतव्यङ्ग्यप्रकाराणां यथायोगं [यथा] संभव पूर्ववत् ध्वनिप्रकारवत् । **ध्वन्यङ्गतेति** । अङ्गता उपाधिः, तेनोपाधिना काव्यस्य ध्वनित्वमेव न तु गुणीभूतव्यंग्यत्वमिति भावः । काव्यवृत्तेस्तदाश्रयात् । [8]तदुभयसंवादनपूर्वकत्वात् [9]एतच्च प्राचीनानुसारेणोक्तम् ।

ज्योत्स्नापूर्वप्रसवधवले सैकतेऽस्मिन् सख्या
वादद्यूतं सुचिरमभवत् सिद्धयूनोः कयोश्चित् ।
एकः प्राह प्रथमनिहतं केशवः कंसमन्यः
सत्वं तत्वं कथय भवता को हतस्तत्र पूर्वम् ।।

---

१. Pt. text reads ००स्वल्पतयैव for तुल्यतयैव ।
२. ,, ,, ,, पूर्ववत् for पूर्वत्र ।
३. ,, ,, omits सन्दिग्ध ।
४. ,, ,, reads झटित्यप्रतिभासात् for झटित्यर्थप्रतिभासात् ।
५. ,, ,, reads विद्यमानमेव मुख्यार्थबाधात् रससंबन्धानपश्यतां for विद्यमानमेव मुख्यार्थबाधादेरनुसन्धानमपश्यताम् ।
६. ,, ,, omits व्यङ्ग्यं ।
७. ,, ,, reads चारुत्वं संभावितं for चारुत्वं संभवति ।
८. ,, ,, ,, तदभिवादनपूर्वकं ता for तदुभयसंवादनपूर्वकत्वात् ।
९. ,, ,, ,, एताश्च for एतच्च ।

इत्युदाहरणं यत् केचित् ध्वनौ पठन्ति तदयुक्तं—भवतेत्यनेन [१]लक्ष्यतारूपणस्य स्फुटीकृतत्वादिति लोचनकारोक्तदिशाऽगूढाख्यगुणीभूतव्यङ्ग्यभेदस्य वाच्याङ्गता-दर्शनात् वाच्यालङ्कारस्य पुनर्गुणीभूतालङ्कारस्य व्यञ्जकत्वं यथा—

साहित्यपाथोधिसुधारसज्ञः
कापिञ्जलः कश्चिदपीह लोके ।
आदत्तमेकोमवनुविनृपुष्पीपु [?]
पुष्पद्वयं वधी [?] रित्यादिषु । हृषति [वाच्यानां] दृष्टान्त

प्रतिवस्तूपमादीनां गुणीभूतोपमाव्यञ्जकता ।

## ध्वनेस्त्रैविध्यम्

**सालङ्कारैरिति** । ध्वनि [ने] रुक्त भेदवतः, तैः गुणीभूतव्यङ्ग्यैः अर्थादष्टाना-मप्येषां [२]ध्वनिभेदसंख्यारीत्या सजातीयसंसृष्टौ षट्त्रिंशत् । [३]पुनः सङ्करे तु शतमष्टोत्तरमिति । ततश्चत्वारिंशदधिकं हयुद्ध [शुद्ध ० ह्यु्क्त] भेदाष्टकेन सह चैवं [४]बाणचन्द्रसंख्याकभेदवद्भिः ।

**संसृष्टीति** । एकया संसृष्ट्या त्रिभिश्च सङ्करैः योगः संबन्धः । **तैरेवालङ्कारैरिति** । वाच्यालङ्कारव्यङ्ग्यैः **अलङ्कारयुक्तैरिति** । वाच्यालङ्कारयुक्तैः उद्योतते प्रकाशते ध्वनिरित्यनुषङ्गः भेदानां विशेषानां गणने शुद्धजातीय [सङ्कीर्ण] संसृष्ट-तया संख्याने शृङ्गारस्य विवक्षितान्यपरवाच्यविशेषासंलक्ष्यक्रमविशेषरसविशेषस्य [५]आनन्त्यं, पूर्वोक्तरीत्या शुद्धसङ्कीर्णसंसृष्टता । भिन्नानां ध्वनिगुणीभूत-व्यङ्ग्यानाम् ।

संप्रति व्यञ्जनावृत्तिसद्भावे विप्रतिपत्तिनिरासादभासमानस्य [निरासं आरभमाणस्य] प्रकरणस्य सुप्रतिपत्तये संक्षिप्य ध्वनिगुणीभूतव्यङ्ग्यभेदमाह ।

---

१. Pt. text reads कृणतारूपणस्य for लक्ष्यतारूषणस्य ।
२. ,, ,, reads ध्वनिभेदसंख्यानामित्याह for ध्वनिभेदसंख्यारीत्या ।
३. ,, ,, reads क्रमः for पुनः ।
४. ,, omits बाणचन्द्र ।
५. ,, ,, reads संख्यानन्त्यं for आनन्त्यम् ।

सङ्कलनेन सङ्क्षेपेण ध्वनेर्ध्वननव्यापारोपहितस्य, तेन ध्वनेर्गुणीभूतव्यंग्यत्वस्यापीत्यर्थः। त्रीणि स्वरूपाणि वस्त्वलङ्काररसादिलक्षणादि। विचित्रं वक्रोक्तिरूपं अलङ्काररुपं च। अलङ्कार्यत्वेऽपि वक्रोक्तिरूपतया अलङ्कारपदवाच्यम्। एतदेवाह [अत्रापीति] य......लक्ष्यते ज्ञायतेऽनेनेति लक्षणं नाम, यस्य रसभावादेरित्यर्थः।

**स्वप्नेऽपीति**। सर्वथेत्यर्थः। तस्या वाच्यत्वे हेतुमाह-**स हीति**। हि यस्मात् तस्य रसादिपदस्य शृङ्गारादिपदस्य वा प्रयोगे **तदप्रयोगेऽपीति**। "शून्यं वासगृहमित्यादौ। एवञ्च "शृंगारः सखि मूर्तिमान् निव [ग्रथा] मधौ मुग्धो हरिः क्रीडति" इत्यादौ विभावादि सामग्र[ग्र्या] एव तद्व्यञ्जकत्वं, न [१]खलु शृङ्गारादिपदस्य, [२]प्रत्युत रसस्य सु [स्व] शब्दवाच्यत्वे दोष इति वक्ष्यते। **अर्थान्तरेति**। वाच्यपदस्य प्रत्येकमन्वयः। प्राक् लक्षणानिरूपणप्रस्तावे।

**शब्देति**। "भद्रात्मन" इत्यादौ नियन्त्रणेन। शक्त्यन्तरस्य गतेन निर्विवादमिति **तत्रैवास्मद्व्याख्या** [३]ग्राह्या।

## अभिहितान्वयवादे व्यङ्ग्यस्य वाच्यतानिरासः

**अर्थेति**। विशेषे संसृष्टंकारेण [संसृष्टसंकरेण] युज्यन्ते न शक्यन्ते [४]आनन्त्यव्यभिचारदोषादित्याहुः **सामान्यरूपाणामिति**। विश? लिताकाराणां पदार्थानां पदैव ............[रभिधया] बोधितानां, [५]**यद्वा भाट्टमते**-अत्र विशेषे सुलक्षणे [स्वलक्षणे] सामान्यरूपाणां गोत्वादिसामान्यानामेव पदैरभिधानानन्तरं [६]तदविनाभावादाक्षिप्तस्वलक्षणानां। नैयायिकादिमते तु विशेषे प्रस्तुतोपयोगिनि ततो............नात्यन्तव्यभिचारः [नानन्त्यव्यभिचारः सङ्केतस्याशक्यतया जात्यवच्छादितया पदैरभिहितानां परस्परं संसर्गे विशेषणरूपं द्वितीयलक्षणोपनीते अपदार्थ [७]एकैकपदालभ्यार्थः विशेषरूपसन्वितानामिति विलक्षणस्वरूपः। [?] कारार्तेति [?]

१. Pt. text reads च for खलु।
२. ,, ,, ,, प्रधानरसस्य for प्रत्युतरसस्य।
३. ,, ,, ,, रीत्या for ग्राह्या।
४. ,, ,, ,, अनन्तदोषादित्यर्थः for आनन्त्यभिचारदोषादित्याहुः।
५. ,, ,, omits यद्वा भाट्टमते।
६. " " reads तद्विभावादाक्षिप्तसुलक्षणानां for तदविनाभावादाक्षिप्तस्वलक्षणानाम्।
७. " " " एकैकपदलभ्यार्थः for एकैकपदालभ्यार्थः।

वस्त्वलङ्काररूपस्य व्यङ्‌ग्यस्यार्थस्य [1]वाक्यादपि [वाच्यादपि] पश्चाद्भावितया शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादिति । येनाभिधावृत्ते बोद्धतया दुर्धिप्रकर्षात् का कथेत्यर्थः ।

## अन्विताभिधानवादनिरासः

संप्रत्यन्विताभिधानवादिभिरपि व्यञ्जनावृत्तिरंगीकार्येत्याह **आक्षिप्येति** । अहो [आंहु] रित्यादिना विध्यादेश्येत्यन्तेन ग्रन्थेन । येप्याहुस्तेत्वन्विताभिधानावादिनां मत इति तूत्तरेण संम्बन्धः । इतिशब्देन शब्देत्यादिकारिकाद्वयपरामर्श ।

दृशा दर्शनेन, दिशेति पाठे मार्गेण कारिकार्थश्च शब्दो गामानयेत्यादि वाक्यं वृद्धौ प्रयोजकप्रयोज्यौ, अभिधेयः प्रयोजकवृद्धस्य गामानयेत्यादिवाक्यश्रवणानन्तरं, प्रयोज्यत्वस्य गवानयनादिः, एतान् श्रोत्राणि प्रत्यक्षेन पश्यति गृहयति [गृहणाति] अर्थात् व्युत्सा [व्युत्पित्युः] । अत्र व्युत्पत्तिकाले श्रोतरिति प्रयोज्यवृद्धस्य प्रतिपन्नत्वं वृद्धवाक्यावगतित्वं गवानयनादिचेष्टयानुमानेन पश्यति जानाति । अनुमितिशरीरंच येयं प्रयोज्यवृद्धस्य प्रवृत्तिः ।

सैतदनुगुणपूर्विका प्रवृत्तित्वात् [2]मदीयैवं प्रवृत्तिः स्यात् [त्वात्] सा च बुद्धिरेतत् प्रयोगजन्या[3] एतदन्वयव्यतिरेकार्थानुविधानादिति द्वयं आश्रयभूतस्य वाक्यस्य [4]वाचकत्वनियमनं विषयभूतस्य चार्थस्य [5]व्यङ्‌ग्यत्वनियमनं आत्मस्वरूपं यस्यास्तथाभूतां शक्ति [6]वाचकप्रवाचारूपं संबन्धं अन्यथाऽनुपपत्याऽर्यात् प्रयोज्यवृद्धप्रवृत्तेर्जानाति ।

नन्वेवं [7]भिन्नवाक्ययोगात् प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया [8]सूचन [सा च न] दुरुपपादेति शब्दव्यवहारोच्छेदः स्यादित्यत आह अर्थापत्या चेति । चकारेण

---

१. Pt. text reads वाक्येऽपि for वाक्यादपि ।
२. " " " तदादाद्यैवं प्रवृत्तित्वात् for मदीयैवं प्रवृत्तिः स्यात् ।
३. " " " प्रयोगजन्या एव for प्रयोगजन्या एतत् ।
४. " " " वाचकत्वं for वाचकत्वनियमनम् ।
५. " " " व्यङ्‌ग्यस्यानियमनं for व्यंग्यत्वनियमनम् ।
६. " " " वाच्यवाचकरूपं for वाचकप्रवाचारूपम् ।
७. " " " भिन्नवाक्यभागयोगात् for भिन्नवाक्ययोगात् ।
८. " " " साचानत्यात् for सूचन [ सा च न ?]

बोधेच्छक्तिं द्वयात्मिकामित्यस्य परामर्शः । अवगम्यन्त इति[1]पठेत् । अर्थत एवायमर्थः [2]गृहीतः, न संकेतत्वाद्वाक्यभागरूपस्य [3]पादस्याकारो यस्मिन्नर्थे [4]द्वावे चोत्वार [?] स्तस्मिन्नर्थे तस्यैव पदस्य शक्तिरर्थापत्त्या अवधार्यत इति नानावाक्येषु [5]पूर्वापूर्वपदयोगेऽपि न व्यामोहः । एवञ्चोक्तप्रकारेण प्रत्यक्षादि त्रिप्रमाणकं वाच्यवाचकसंबन्धव्युत्पित्सवो राजानन्ति [रेव जानाति]। शब्देत्यादि पश्यतीत्यन्तस्य कारिकाभागस्य देवदत्तेत्यादिना सतीत्यन्तस्य कारिकाभागस्य देवदत्तेत्यादिना सतीत्यन्तेन विवरणम । [6]श्रोतुरित्यादेरथेत्यन्तस्य अनेनेत्यादिना अनुमायेत्यन्तेन ग्रन्थेन । अन्यथानुपपत्त्यादेर्द्वयात्मिकामित्यन्तस्य तयोरित्यादिना अन्यथानुपपत्त्येति कारिकापदस्यार्थो । अर्थापत्त्येति अर्थापत्त्या चेत्यस्य परत इत्यादिना अन्वयव्यतिरेकाभ्यामित्यन्तेन ।

**अयमर्थः**। यस्य पदस्यान्वये यस्यानुभागस्यान्वयः यस्य व्यतिरेके व्यतिरेकस्तस्य तस्य शब्दस्य तं तमर्थं जानातीति व्यवहारेषु वृद्धानां वाक्यश्रवणादिषु आवापोद्वाप भेदेन पदानां शक्तिनिश्चिय इति। प्रकृते योजयति [इतीति] इत्युक्तप्रकारेण [7]प्रवृत्तिनिमित्तकारीति हेतुगर्भं विशेषणम् । तेन प्रवृत्तिनिमित्तकारित्वादित्यर्थः। गामानयेति वाक्ये गवानयनप्रवृत्तिकारिणां नानये [?] ह्यश्रुमानुयेति [अश्वमानयेति] वाक्ये तत्रैव निमित्तकारि इति शब्दस्यान्वयव्यतिरेकाभ्यामित्यतः पूर्वं पाठे इति शब्दः प्रकारार्थः । अन्वयव्यतिरेकाभ्यामिति पदस्य [8]च उत्तरवाक्ये योजना । वाक्यमेवेत्येवकारेण एकस्य विशकलितानार्था[9] पदानां व्यवच्छेदः इति हेतोः यस्मात् प्रयोजकादेव संबन्धनिश्चय इति भावः । **इतीति** । यस्मादेवं व्युत्पत्तिग्रहणप्रकारः तस्माद्वाक्यस्थितानां वाक्यतयैकार्थप्रतिपत्यर्थगुणतया स्थितानामेव पदानामन्वितैः पदार्थान्तरसंसृष्टैः पदार्थैः सहान्वितानां समभिव्याहृतानामेव सङ्केतो गृहयते । स च सम्यक् केतनं ज्ञापनम् ।

---

१. Pt. text reads इति for पठेत् ।
२. ,, ,, ,, गृहीतसंकेतत्वात् for गृहीतः न संकेतत्वात् ।
३. ,, ,, ,, यदस्याकारो for पादस्याकारो ।
४. ,, ,, ,, सङ्केतः ।
५. ,, ,, ,, पूर्वापरपदयोगेऽपि for पूर्वापूर्वपदयोगेऽपि ।
६. ,, ,, ,, श्रोतुरित्यादेश्चेष्टेत्यन्तस्य for श्रोतुरित्यादेर थेत्यन्तस्य
७. ,, ,, ,, प्रवृत्तिनिवृत्तिकारी for प्रवृत्तिनिमित्तकारी ।
८. ,, ,, omits च
९. ,, ,, reads विशकलितानर्थ वादानां for विशकलितानार्था पदानां ।

उपसंहरति **इतीति**। इति हेतोः विशिष्टा गुणप्रधानभावेन परस्परान्विता एव पदार्थाः वाक्यार्थः न तु विशकलितया प्रथमं पदैरभिहितानां पदार्थानां वैशिष्ट्यं पश्चात् वृत्यन्तरयोः संसर्गमात्रम् ।

[१]ननु गामानयेत्यादौ [२]यान्येव गवादिपदानि तान्येव गां बधान अश्वमानयेत्यादावपि इति [३]निश्चयात् विशेषेषु चानन्त्यव्यभिचारदोषापातात्[४] । [५]क्रियासामान्यान्वितायामेव द्वारके [कारके] कारकपदानां [६]कारकसामान्यान्वितामेव [७]क्रियायां क्रियापदानामन्वयव्यतिरेकमूलस्य संबन्धग्रहणात् संबन्धानुसारेणैव [८]चाभिधानात् पदानां [९]सामान्यद्वयाभिधायितैव युक्ता । ततश्च विशेषान्वयरूपस्य वाक्यार्थस्य प्रतीतिरनुपपन्नेत्याह **यद्यपीति** । प्रत्यभिज्ञारूपः प्रत्यक्षो [प्रत्ययो] ज्ञानं स च प्राचीनेदानीन्तनदशा [१०]विशिष्टधर्मिबोधः । निश्चीयतेऽबाधिततया च बिषयीक्रियन्ते इति हेतोः एकदेशमात्रेण प्रतिबन्धविरहात् सामान्यमात्रविषयताविश्रान्तेत्यर्थः । सामान्यावच्छादितोऽभिहितान्विता सामान्यं विना [११]लभ्यः विशेषरूपः प्रकृताविनियोगे[?] योग्यः । असौ कान्वित [?] क्रियाभेदः प्रतिपाद्यते पदैः कुत इत्यत आह व्यतिषक्तानां गुणप्रधानभावेनान्वितानां पदार्थानां तथाभूतत्वात्[१२]प्रकृतविशेषार्थकत्वात् गुणप्रधानभावेनान्वयश्चाकाङ्क्षादिसामग्रीवशादिति भावः । पदानामिति पाठे तु व्यतिषक्तानां समभिव्याहृतरूपाणां पदानां तथाभूतत्वात् । समभिव्याहारमाह येन [१३]तथा विधश्च प्रतिपत्तिक्षमत्वादित्यर्थः । सामान्यविशेषरूपप्रहृतविषयस्य [प्रवृत्तिविषयस्य] सङ्केतानां समन्वितत्वात् सामान्यरूपः पदार्थान्विततया च विशेषरूपः पदार्थः

---

१. Pt. text reads न तु for ननु ।
२. ,, ,, reads यानि for यान्येव ।
३. ,, ,, reads ब्रूयात् for निश्चयात् ।
४. Pt. text reads व्यभिचारदोषात् for व्यभिचारदोषापातात् ।
५. ,, ,, reads क्रियासामान्यात् for क्रियासामान्यान्वित एव ।
६. ,, ,, reads क्रियासामान्येऽन्यान्वितानामेव for कारकसामान्यान्वितायामेव ।
७. ,, ,, reads क्रियाणां for क्रियायाम् ।
८. ,, ,, omits च ।
९. ,, ,, सामान्याभिधायितैव for सामान्यद्वयाभिधायितैव ।
१०. ,, ,, विशिष्टधर्मिबोध for विशिष्टधर्मिबोधात् ।
११. ,, ,, अलभ्यः for लभ्यः ।
१२. Pt. text reads प्रकृतविशेषार्थकृत् for प्रकृतविशेषार्थकत्वात
१३. ,, ,, reads तथाविधार्थ for तथाविधश्च ।

एकैकपदबोध्यः अतिविशेषभूतः प्रकृतोपयोगी शरीरः, तदेतदाह [1]वाक्यार्थान्ते ततः संसूच्यमाना क्रिया कारकविशेषार्थकयोसौ [?] संवुदितशरीरो [समुदितशरीरो] वाक्यार्थ उच्यत इत्यर्थः । अवाच्य एव प्रतिपाद्यते व्यवह्रियते बोध्यते वा पदैः अर्थान्तरभूतस्य संसृष्टोपान्तपद्यर्थातिरिक्तस्य विध्यादेः विध्यादिव्यङ्ग्यस्य वाच्यत्वं·····
·······वत इत्यर्थः । **वाचस्पतिमते तु** पूर्वोक्तरीत्या निःशेषेत्यादौ [2]विधेर्लक्ष्यत्वात् ।

**अयमर्थः**-शब्दतदर्थवाच्यवाचकव्युत्पन्नानामेव वाक्यार्थप्रतीतिव्युत्पत्तिश्च[3] वृद्धप्रयोगादेव स च वाक्यरूप एव वाक्यं चान्वितबोधननियतं, ततश्चोपदेशकालेऽन्वितयैव प्रथमतः प्रतीतिः । ततश्च वाच्य एव वाक्यार्थः । किं तावत् तात्पर्याख्यवृत्यन्तरकल्पनये[4]············दन्तो द्रवतयाः [?] आनन्त्यव्यभिचाराभ्यां विशेषेषु सङ्केतग्रहणस्याशक्यतया कारकसामान्यान्विते क्रियासामान्ये, क्रियासामान्यान्विते च कारकसामान्ये स्वयमाश्रयणीयः । ततश्चाभिधायाः [5]सामान्यान्वये प्रतीतेऽपि [6]तन्मात्रेऽस्याकिंचित्करतया प्रकृतविनियोगयोग्यस्य कारकविशेषान्वितस्य क्रियाविशेषस्य बोधने भवन्मते तात्पर्याख्यद्वितीयलक्षणावृत्तेरङ्गीकारात् व्यञ्जनैव वृत्तिरुपासितुमुचिता । [7]ततः पश्चाद्भाविनो व्यंग्यवस्त्वलङ्काराया [रयोः] पुनरभिधाने का कथा । एवं युक्तं मतद्वये वृत्यंगीकारस्यावश्यकत्वं उपसंहरति **अनन्य इति** । [अनन्वित इति] अन्वितविशेषविशेषः व्यंग्यरूपः । अपदार्थोऽनन्वितैरन्वितैर्वा पदैर्बोध्योऽनभिधेयश्च स न वाक्यार्थः दिवादिभोजनरहिते [8]पीने रात्रिभोजनापेक्षे [9]यद्वत् शब्दनिमित्तिका यस्य यस्यार्थप्रतीतिः तस्य तस्यापेक्षशब्दस्य निमित्तता कल्प्यते । किं व्यापारान्तरकल्पनयेति वदतां **गुरुदर्शनैकदेशिनां** [10]मतमनु-

---

१. Pt. text reads वाक्यान्तरितः for वाक्यार्थान्तरेततः ।

२. „ „ reads विधेर्लक्षत्वात् for विधेर्लक्ष्यत्वात् ।

३. Transcript reads प्रतीतिव्युत्पत्ति वृद्धप्रयोगादेव स च वाक्यरूप एव वाक्यं चान्वयबोधनियतं, ततश्चोपदेशकालेऽन्वित एव संबन्धग्रहणात्—additionally.

४. Pt. text reads ०० तिव in theblank.

५. „ „ „ सामान्यान्विते for सामान्यान्वये ।

६. „ „ „ तन्मात्रस्य for तन्मात्रे तस्य ।

७. „ „ „ तत् for ततः ।

८. „ „ omits पीने ।

९. „ „ reads यद्वत् शब्दनिमित्तिका for पीनशब्दनिमित्तका ।

१०. Pt. text reads मतमनूद्य for मतमनूद्य ।

सृत्य दूषयति [1]यदपीति। शब्दो हि नाज्ञानादिव घटं करोति, किन्तु दीपवत् प्रकाशयति [2]ज्ञापकत्वमिति प्रत्यक्षेतरप्रमाणानां हि [3]ज्ञानकारणत्वं शब्दस्यातकरणत्वे [शब्दान्तरस्य कारणत्वे] गामानयेत्यादि [4]वाक्येषु..........न्नाव्यपन्वयोरनुपरिज्ञाना विशेषप्रसङ्गः स्यात्। स च सङ्केतः पूर्वोक्तदिशा [5]अन्वयमात्रे, न तु व्यङ्ग्येऽर्थे।

उपसंहरति एवञ्चेति। [6]निमित्तस्य नियतनिमित्तत्वमित्यस्यार्थः। नियामकरूपसंबन्धशालित्वं नैमित्तिकस्य व्यंग्यार्थस्य संबन्धग्रहणात् पुरस्कारेऽपि च वाक्यार्थप्रतीति [र्ध]........मिग्राहकप्रमाणगम्या, यदि तु पूर्वसङ्केतग्रहणसंस्कृतस्य प्रतिभानवतः, तया प्रतिपत्तिर्भवतीत्यनेन क्रमेण निमित्तनैमित्तिकभावोऽभिधीयते तदेतदङ्गीक्रियत एव, व्यङ्ग्यव्यञ्जकभावं प्रत्युपात्तयोःशब्दार्थयोः प्रथममुपादीयमानत्वात्। तदुक्तं ध्वनिकृता—

आलोकार्थी यथा दीपशिखायां यत्नवान् जनः।<br>
तदुपायतया तद्वदर्थे वाच्ये तदादृतः॥<br>
यथा पदार्थद्वारेण वाक्यार्थः संप्रतीयते।<br>
[7]वाक्यार्थपूर्विका तद्वत् प्रतिपत्तस्य वस्तुनः॥ इति।

ननु तर्हि भट्टनयवत् पीनो देवदत्तो दिवा न भुंक्त इत्यादौ रात्रौ न भुंक्तं इत्यादिवाक्यशेषादत्रापि व्यंग्यार्थप्रतीतौ वाक्यशेषः कल्प्यतामिति चेन्न धर्मिकल्पनातो वरं धर्मकल्पनमिति न्यायात्। व्यापारान्तरकल्पनस्यैव न्यायात्।

संप्रति तदेकदेशान्तराणां परस्परोपकारकं शक्तिद्वयमुपन्यस्य दूषयति। येत्विति। यथा खलु धनुष्मता [8]मुक्तो बाणः एकेनैव [9]वेगरूपाख्येन शत्रोः कवच-

१: Pt. text reads तदपीति for यदपीति।<br>
२. ,, ,, ,, ज्ञापयति वेति for ज्ञायकत्वमिति।<br>
३. ,, ,, ,, ज्ञाते कारणत्वं for ज्ञानकारणत्वम्।<br>
४. ,, ,, ,, ज्ञानविशेषे प्रयोगाः स्यात for ००० परिज्ञानाविशेषप्रसङ्गः स्यात्।<br>
५. ,, ,, ,, अन्वितमात्रे for अन्वयमात्रे।<br>
६. ,, ,, ,, नैमित्तिकस्यानियतनिमित्तत्वं for निमित्तस्य नियतनिमित्तत्वम्।<br>
७. ,, ,, ,, वाच्यार्थपूर्विका for वाक्यार्थपूर्विका।<br>
८. ,, ,, ,, प्रयुक्तो for मुक्तो।<br>
९. " " " घातेन for वेगरूपाख्येन।

युगादिकं [१]कलेवरं निर्भिनत्ति—तथैक एव शब्दस्याभिधाव्यापारो [२]याव.......... [दर्थं] बोधयति। यत् परः.............[३]प्रयुक्तः शब्दः स शब्दार्थः, शब्देनावश्यं बोध्यः इति हेतोः। अत्र निःशब्देत्यादौ [निःशेषेत्यादौ] विधिर्वाच्य एव, इत्येवकारस्य व्यङ्ग्ययोजना [व्यंग्ये योजना] इति। ये तु ये पुनरभिदधति तेऽपुनर [?] तात्पर्यज्ञाः तात्पर्यवाचोयुक्तेस्तात्पर्यप्रयोगस्य देवानां प्रियाः। [पशवः] [४]शब्दतात्पर्यप्रयोगं न जानन्तीत्यर्थः। कुत इत्याह-**तथा [हि] इति**। भूतानि सिद्धरूपाणि कारकाणि, भव्यं साध्यं क्रियारूपं, एषां समुच्चारणे एतद्वाचकपदानां समभिव्याहारे। भव्याय साध्यरूपतया कारकपदार्था लोहितोष्णीषा इत्यादयः स्वक्रियाः स्वस्यैवान्तर्लीना या क्रिया [५]नन्दति [?] संबन्धात् यद्यपि कारकस्वरूपं पूर्वसिद्धमेव, तथापि क्रियावत एव कारकत्वात्, क्रियायाश्च साध्यरूपत्वात् [६]कारकान्वयेऽपि साध्यरूपाणीति भ्रावः, अदग्धस्य भागस्य पुनर्दाहो यथा [यथा] सर्वपदार्थानां [७]...... त्वेऽपि योऽर्थः प्रमाणान्तरेण प्राप्तः स एव विधीयते प्राधान्येनोपदिश्यते, [८]प्राप्तेरुपदेशवैयर्थ्यात्। तथाहि [९]दह्य एव प्राधान्ये अत्रैव [१०]तात्पर्यशक्तिर्विश्रान्तिमर्हतीति न पुनः प्रतीतिमात्रे।

अनुपातु [अनुपात्त एव] रोपपद [पदे] वाक्यार्थप्रत्ययान्तरबोध्येऽर्थे [११]एवमतिप्रसङ्ग इत्याह **एवमिति**। अपराद्यर्थे पूर्वाद्यर्थेनाविनाभावेनालिप्ति [क्षिप्ते] भवतामपि तात्पर्यविशेष ........................ शयः [१२]वाच्यार्थव्यंग्यार्थव्यंग्यार्थप्रतीत्यो

---

१. Pt. text reads अनेकं for कलेवरम्।
२. " " " तद्वदवश्यं for यावदवश्यम्।
३. " " " यदुद्देशेन for blank।
४. " " " तात्पर्ययोगं for शब्दतात्पर्ययोगम्।
५. " " " तदभिसंबन्धात् for नन्दति [?] संबन्धात्।
६. ,, ,, ,, कारकाण्यपि for कारकान्वयेऽपि।
७. ,, ,, ,, विध्यर्हत्वेपि in the blank.
८. ,, ,, ,, प्राप्तेतूपदेश for प्राप्तेरूपदेश।
९. ,, ,, ,, दग्ध एव for दह्यएव।
१०. ,, ,, ,, तात्पर्यशक्ति विश्रान्तिरिति for तात्पर्यशक्तिर्विश्रान्तिमर्हतीति।
११. ,, ,, ,, एव हानिप्रसङ्गा for एवमतिप्रसङ्गः।
१२. ,, ,, ,, ०० तया अनङ्गीकृत इति भावः अयमा....in the blank.

हेतुफलभावाङ्गीकारात् नैयायिकाभिधया तात्पर्येण वा वृत्या युगपत् प्रतीतिः। क्रमप्रतीत्यङ्गोकारेतु लक्षणांगीकारस्याप्यनुचितत्वात् अङ्गीकृततात्पर्याणां च विरम्य व्यापारस्वीकरणात् न केवलमपराद्यनु साधारणयोर्वस्त्वलङ्कारयोस्तात्पर्यं [1]न प्रभवति किन्त्व यातु [?] वाचकत्वात् प्राधानभूतयोरपीति भावः।

ननु [2]यद्युपात्तवाचक एवार्थे तात्पर्यं [3]प्रसरति विषं भक्षयेत्यादि वाक्ये का गतिरित्याह **यस्त्विति**। स एव वाक्यार्थो वाक्योद्देश्य इति। अर्थैकत्वात्। एकं वाक्यं साकाङ्क्षा चेद्विभागे स्यादिति [पू० मी० २-१-४७] जैमिनिवचनात् विषं [4]भुंक्ष्वेत्येतावन्मात्रस्याकस्मादुच्चरितस्य साकाङ्क्षत्वात् समनन्तरोच्चारिते [न] मात्रेत्यादिना [मा चेत्यादिना] एकवाक्यता सा च चकारेण सूच्यत इति भावः। **न चेति**। व्यङ्ग्यत्वेनानुवाद्यवाचकत्वेन मा चेत्यादिः। प्राकर्णस्यैकतया विधेय-वाच्यस्याङ्गता अर्थवाद्यन्तेत्यर्थः। ततः [तत्र] किमित्याह **विषभक्षणादपीति**। दुष्टमधिकदोषावहं इत्यनेन नयेन उपात्तानामेव शब्दानामर्थे [5]संसर्गमात्रे संसृष्टा-कारे वा तात्पर्यं पर्यवस्यति, न तु व्यर्थे तद्त ........[6]पदस्य भक्षणादपीति न साक्षादर्थः किन्तु व्यङ्ग्य एव इत्यभियुक्तानां मतम्।

एवञ्च यत्परः शब्दः स शब्दार्थ इति पक्षस्य निरासिनापि [?] निरस्तं सेयमिषोरित्यादिपक्षं प्रकारान्तरेणापि परिहरति **यदिचेति**। **हर्षेति**। हर्षादयो हि न तेनापि [7]वाच्यत्वेऽवगम्यन्ते, यतोऽमी वाच्चार्थप्रतीत्या क्रियन्ते न खलु शब्दस्य कारकत्वं पूर्वोक्तरीत्यादिज्ञापकत्वात्। [8]तस्य तस्य तच्छब्दाद्वाक्यार्थः प्रतीयते, तत्प्रतिपत्या [9]हर्षमुद्भवति। एवमपि च शब्दाङ्गीकारे शब्दादेव केवलात् सकलार्थ-प्रतिपत्तिःनिष्पत्तिः। श्रुतार्थापत्यादि [10] प्रमाणान्तरस्वीकरणमपि निरर्थकं स्यात्,

---

१. Pt. text reads न प्रसज्यति for न प्रभवति।
२. " " यद्युपात्तस्य वाचकस्य for यद्युपात्तवाचके।
३ " " प्रसज्यति for प्रसरति।
४. " " ०० भुंक्ष्वेत्यादि वाक्ये for भुंक्ष्वेत्येतावमन्मात्रस्य।
५. " " संगमात्र संसृष्टाकारेण for संसर्गमात्रे संसृष्टाकारे वा।
६. ,, ,, तद्वतस्तत्र भंक्ष्वेति in the blank
७. ,, ,, वाच्यत्वेनाभ्युपगम्यते for वाच्यत्वेऽवगम्यन्ते।
८. ,, ,, तस्मात् शब्दवाक्यार्थःनिष्पत्तिः प्रतीयते for तस्य तस्य तच्छब्दाद्वाक्यार्थः प्रतीयते।
९. ,, ,, हर्षापुपमि [?] for हर्षमुद्भवति।
१०. ,, ,, ००० स्वीकरणमपि for स्वीकारेणापि।

लक्षणेत्यनन्तरं पृथगुच्यत इति शेषः। यद्यभिधायास्तात्पर्यस्य वा लिखितशब्दा ···[र्थ] प्रत्यायनसामर्थ्यं तदा श्रुत्यादिप्रमाणान्तरषट्कस्य[१] समवाये [२]पारदौर्बलमथ-विप्रकर्षादिति भवतः प्रक्रियाकल्पनमिति [मपि] नोपपद्यते सर्वेषां [३]समनुप्रसङ्गा-दित्यत आह **किमिति चेति**। द्वितीयान्तं पदं **श्रुतिः** तृतीयान्तमपीति **भट्टः**। पदार्थ-सामर्थ्यं लिङ्गम्, [४]यथासंख्यं स्थानं यौगिकम् नाम सामाख्या ताताशेष्टुंल्यष्टुं [?] [५]एषां समवाये पूर्वस्य बलीयस्त्वंम्। तन्नरोन्तरेषा [तत्रोत्त रोत्तरेषां दौर्बल्यं] मर्थविप्रकर्षात्। यथादर्शपूर्णमासयोः व्रीहीनवहन्तीत्यादौ योगिकसमाख्यया विनि-योगः, तत्र लिङ्गापेक्षया श्रुतेर्बलीयस्त्वं यथा—"ऐन्द्र्या गार्हपत्यमुपतिष्ठत" इति। अत्र ऐन्द्र्याश्च [च] इन्द्रप्रकाशनसामर्थ्याल्लिङ्गं लक्षणालिङ्गादिन्द्रोपयो [?] स्थान-विनियोगो गार्हपत्यमिति द्वितीयया श्रुत्या बाध्यते।

**अयमाशयः**। "ऐन्द्रेत्यादौ श्रुतौ यतः श्रुतेर्बलीयस्त्वं तदपदार्थत्वेन व्यञ्जना-नङ्गीकारेण निर्वहतीति ॥

**उपसंहरति** अपिशब्दादभिहितान्वयवादादौ विधेर्निःशेषेत्यादि व्यङ्ग्यस्यापि शब्दादलङ्कृतिध्वनेः।

संप्रति रसभाव तद्भारेत्यादिरूपे [?] व्यञ्जकत्वमङ्गीकार्यमिति दर्शयति] वैपरीत्यं रुचिं कुर्विति पाठः। अत्र हि चिङ्कुपद काश्मीरादिभाषायामश्लीलार्थ-बोधकम्। उत्कलादिभाषायां धृतवांडकं इव इत्यादि असभ्योऽश्लीलः। अपरित्याज्यं स्यात् व्यञ्जनानङ्गीकारे तत्प्रतीते ········ [रसम्भ] वात् नित्यदोषत्वं सार्वत्रिक-त्वात् कष्टत्वं कष्टोच्चार्यत्वं श्रुतिकटुत्वं तत्प्रभृतीनामनित्यदोषत्वं रौद्रादावदुष्ट-त्वात्।

यथा **मम नृसिंहविजये**—

स्फुटविकट [च] [६]पेटापातलेनायमष्टौ
सपदि कुलगिरीन् वा खण्डशश्चूर्णयामि।

---

१. Pt. text reads विकस्य for····· षट्कस्य।
२. ,, ,, पारदौल्यपकर्षादिति for पारदौर्बल्यपमर्थविप्रकर्षादिति
३. ,, ,, समनुपसंगात् for समनुप्रसंगात्।
४. ,, ,, यथालिङ्गस्पातं [?] for यथासंख्यम्।
५. ,, ,, ००० पातलेन।

प्रलयमरुद्ध [?] दारस्फीतहेतो[१] हृतवात
प्रसूतितिरथगारातमावार्तक्षिपामि ।। [?]

तथा च ममैव—

[२]निःश्वासोत्पातवातप्रसव धुतकुलाहार्यमुद्यष्ट दंष्ट्रा
जातः स्फुलिङ्गप्रकरणविरचितोत्कालिकाया निशङ्कम् ।
अर्द्धपारीन्तनर्द्धे नवमहह महालोकमालोक्य लोकाः ।
स्तोकस्तोकावशेषाः शरणमुपययुर्वारिधिं वा [विधिं वा]

सर्वस्यैव [३]रसादितत्ववेदिनः [४]कस्यचिदेव रसादेरौचित्येन समनन्तरोक्तप्रकारेणानित्यदोषाणां क्वचिदानुगुण्यं [५]दृढयति **द्वयमिति** । अत्र प्रथममन्यथेति शेषः । वाच्यं शोचनीयत्वं काव्यानुगुणत्वमिति पाठे काव्यस्योत्कर्षकत्वं कापालिपिनाकिपदयोर्द्वयोरपि साम्ये भगवद्वाचकत्वे कपालिपदेन संबन्धनिमित्तकस्य सकलामङ्गलविघ्नद्ब [वि] निन्दिता [?] वाचकत्वादेः प्रत्यापनीत प्रहृतपोषकत्वम् [?] न चैतत् शृङ्गारादिरसोचितामित्यमङ्गलरूपाश्लीलस्यानित्यदोषता । एवञ्च व्यञ्जनाभावे कपाल्यादिपदं सर्वत्रैव वर्जनीयं स्यादिति भावः ।

किञ्चैकत्र वाक्ये एक एवाभिधेयः व्यङ्ग्यस्तु वक्त्रादिवैचित्र्येणानेक इत्यभिधातो [वि] लक्षणैव व्यञ्जनेत्याह-**अपि चेति** । वाच्योऽर्थः समभिव्याहृतपदबोध्यः । अवस्कन्दनं प्रसभमवमर्दनं, सुरभयो गावः ।

संप्रति [६]विषयवैलक्षण्यदर्शनेनापि वाच्याद्व्यंग्यस्य भेदं दर्शयन्नाह [वाच्य] **व्यङ्ग्ययोरिति** । एवं स्वरूपादिभेदेऽपि यद्येकत्वं वाच्यव्यङ्ग्ययोः क्वचिदपि लीला लीलादौ भेदो [नीलपीतादौ भेदो] न स्यादिति संबन्धः । संशये प्रकरणादितिनियमाभावादशायां वा रसिके व्यंग्यसंभेदरहिते, वपुषा स्वरूपेण स्वरूपस्येति समनन्तरोक्तेषु त्रिष्वपि तृतीयान्तेषु संबन्धः, शब्दशासनं व्याकरणं, अर्थानुशासनं

१. ,, ,, for स्फीतदत्तोद्धतं वा for स्फीतहेतोर्हृतवात ।
२. This श्लोक seems corrupt in transcript.
३. Pt. text reads रसावेदिनः for रसादितत्ववेदिनः ।
४. " " " कस्यचिद्रसादेवौचित्येन for कस्यचिदेव रसादेः ।
५. " " " द्रढयति for दृढयति ।
६. Pt. text reads पदवैलक्षण्य ०० for विषयवैलक्षण्य००।

मीमांसादि, प्रकरणवक्त्रादिसहकृतेन प्रतिभासाः [त्] काव्यरसस्य, ज्ञानाच्च यस्य गुणान्तरातिशयविशेषस्य नैर्मल्येन [1]वाच्यप्रतीतावपि प्रकरणादिसाहाय्यस्याङ्गीकारेऽपि तत्सहिततत्प्रतिमानैर्मल्याङ्गत्वं [?] व्यङ्ग्यस्यैवेति विशेषः। गतोऽस्तमर्क इत्यादेर्विषयाभेदापेक्षया पुनरुक्तेः।

कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्व इदानीम्॥

वारितवामे प्रतिकूलकारिणि। तत्र वाच्यं सखीविषयं अधरेण [भ्रमरेण] दष्टाधरेयं न पुनः [2]पथिकार्थकेन इति व्यङ्ग्यं तत्कान्तारं विषयं भेदेऽपीति पष्पन्ते ......[प्रतिपाद्यत] मन्वयः।

एकत्वमेकवृत्तिबोध्यतालक्षणमैकजाड्यम् [?]। अयमेव हि भेदो यत् विरुद्धधर्माध्यासः। अयमेव भेदहेतुर्य कारणभेद इत्यर्थः। प्रकारान्तरेणापि व्यङ्ग्यस्य वाच्याद्भेदमाह **वाचकानामिति**। **अयमर्थः**—यस्य शब्दस्य योऽर्थो वाच्यस्तस्यार्थस्य पूर्वपरिज्ञाने तस्य शब्दस्य तद्वाचकत्वं ज्ञातुमशक्यं। अतः शब्दानां वाचकत्वं सङ्केतितार्थज्ञानसापेक्षमवगम्यते। व्यञ्जक......... व्यङ्ग्यार्थस्य पूर्वपरिज्ञानमपेक्ष्यापि भवतीत्यपि न वाचकत्वमेव व्यञ्जकत्वं, यद्वाचकानां वाचकन्वारगमे [वाचकत्वाद्भिन्ने] पदार्थज्ञानापेक्षा, व्यञ्जकानां तु सङ्गी च काकलीकोलाहलादीनां रसादिव्यञ्जकेन पदार्थप्रतिसन्धानाभावोऽपीत्युभयोर्भेदः, तात्पर्यवृत्तौ च व्यङ्ग्यार्थबोधनमिति वादिनं प्रति दूषणान्तरमाह **किञ्चेति**। यत्परः शब्दः स शब्दार्थ इति न्यायेन व्यङ्ग्यस्य गुणीभावे शब्दस्य तत्परत्वाभावात् व्यञ्जनानङ्गीकारे शब्दार्थत्वमनुपपन्नं स्यादिति कस्य व्यापारस्य द्यतः [?] पूर्वं व्यञ्जनादृत इति शेषः।

ननु गतोऽस्तमर्क इत्यादिवाक्येन प्रकरणादिरूपज्ञापकास्तव [न्तर] सहायेन विरोधितस्य [बोधितस्य] कान्तमभिसरेत्यादि व्यंग्यार्थस्य कथं शब्दप्रमाणबोध्यत्वं शब्दैकसमधिकत्वाभावादिति चेत् अत्र **केचिदाहुः**—यथा शब्दस्य बोधितस्य क्वचिद्वाच्यस्यार्थस्य सत्यासत्यजिज्ञासायां सत्यमेवायमप्राप्तोक्तवादित्यन्वमानेन [वानित्यन्व भावेन] साधिते सत्यत्वे यथा शब्दप्रमाणवेद्यत्वं तथा व्यंग्यस्यापीति नैवं। तथा हि बाच्योऽर्थः शब्दप्रमाणविषयः तस्य क्वचित् सत्यासत्यजिज्ञासायां

---

१. Pt. text reads वाच्यप्रतीतेरपि for वाच्यप्रतीतावपि।
२. ,, ,, ,, परेण पथिकार्थेन।

सत्यत्वमनुमानविषय इति शब्दानुमानप्रमाणयोर्भिन्नविषयत्वं व्यंग्यस्तु एक एव शब्दप्रमाणेन [1]प्रकरणादिनावरोध्यत इति [2]दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यम् । तत्का गतिरिति चेत् अत्रैवं सङ्गतिः यथा प्रमाणादेः वि [ष्णु] सिंहाद्यनेकार्थस्यापि हर्यात्येकाविधेये [हर्षादेरेकविधधियो] अवच्छेदकत्वं तथानेकव्यञ्जकस्यापि शब्दस्यैकव्यंग्ये प्रकरणादिसाहाय्यस्येतिकर्तव्यतारूपतया शब्दस्यांगत्वं, सांगस्य व्यक्धायकत्वं न्यायसिद्धमेवेति न शब्दप्रमाणाव्याकोपः। इह च यद्यपि वाक्यार्थस्य प्रतीत्यनन्तरं तस्य सत्यासत्यजिज्ञासायां यद्यत्वं [व्यंग्यत्वं] [3]प्रमाणान्तरेणानुमानेनैव बोध्यते तथापि सत्यासत्यत्वजिज्ञासातः पूर्वश्रुतपन्नाया [?] वाच्यार्थप्रमाद्याः [याः] अप्रमात्वाभावात् शब्दैकसमासगम्यत्वाच्च । स[4] शब्दप्रमाणो व्याकोपः [शब्दप्रमाणव्याकोपः] न हि चक्ष्यरादिना [चक्षुरादिना] प्रतीतौ सत्यासत्यत्वजिज्ञासायां प्रत्ययप्रमाणं [प्रत्यक्षप्रमाणं] व्याकुप्यते । एवं व्यङ्ग्यस्य वाच्यत्वं तात्पर्यविषयत्वञ्च निरांकृत्य लक्षत्वं सं [भा] वणां निवा चिकीर्ष [निराचिकीर्षु] राशङ्कते नन्वित्यादिना प्रतीयमाने घ (त्य) न्तेन ग्रन्थेन। वामोऽस्मि [रामोस्मि] इत्यादौ राज्यभ्रंशलकेसहिष्णुतादयः।

प्रत्याख्यानरुचेः कृतं समुदितं क्रूरेण यत्र क्षमा [यद्रक्षसा]
सोढं तच्च तथा [त्वया] कुलजनो धत्ते यथोच्चैः शिरः।
व्यर्थं संप्रति बिभ्रता धनुरिदं त्वद्व्यापदः साक्षिणा
रामेण प्रियजीवितेन तु कृतं प्रेमः [म्णः] प्रियेनोचितम्॥

इत्यत्र मायाशीतांच्छे[?]दर्शने साहसैकरसिकत्व-दुष्कृत-फलभोक्तृत्वादयः, रामोऽसावित्यादावलौकिक [रामोऽस्मीत्यादावलौकिक] प्रभावत्वा द्वयो[दयो] वाम [राम] पदेन लक्ष्यन्त एवेति भवतामपि मतं प्रकरणादिसाचिव्येन उक्तरीत्या नानाविधे प्राधांन्यादिना धर्मपदेत्यादि [?] व्यपदेशाबीजं [5]वाच्येस्यार्थान्तरसंक्रमणादिना अर्थान्तरसंक्रमितवाच्यत्वादिव्यपदेशहेतुः।

---

१. Pt. text reads प्रकरणादिना च बोध्यते for प्रकरणादिनावरोध्यत ।
२. ,, ,, ,, ००० विषयभेदात् for वैषम्यम् ।
३. ,, ,, ,, प्रमाणान्तरेणार्थज्ञानेन for प्रमाणान्तरेणानुमानेन ।
४. ,, ,, ,, न for स ।
५. ,, ,, ,, वाच्यस्य for वाच्येऽस्य ।

अर्थोऽभिधेयम् । एवञ्चोक्तस्य सर्वस्य व्यङ्ग्यप्रकारस्य लाक्षाणकेप्यपन्तेः [लाक्षणिकेप्युपपत्तेः] तदतिरिक्तः सोऽयं [कोऽयं] नूतनः प्राचीनतत्वाप्र [तंत्राप्र] सिद्धोऽसाम्प्रदायि सुः [षु] प्रतीयमानः नाम प्रकाश्ये ।

सिद्धान्तमाह नियतत्वं नियतसंबन्धत्वं एतदेवाह **नखल्विति** । वाच्यार्थ-व्यंग्यार्थयोः संबन्धस्य नियतत्वानियतत्वे एतदुदाहरणव्याख्याने स्फुटीकरिष्यते **न चेति** । न च मुख्यार्थबाधे इति संबन्धः ।

श्वश्रू [रत्र] निषीदति अत्राहं दिवसं प्रलोकय ।
मा पथिक [रात्र्यन्ध] शय्यायां मम निषीद ।।

दिवसमिति [काले] कर्म, कथमत्र लक्षणा मुख्यार्थबाधजीवितेत्यर्थः । प्रति-पादितं लक्षणानिरूपणप्रस्तावे । **तथेति** । समयविशेषः समप्रायो विशेष्यः व्यञ्जनातो वैलक्षण्यम् ।

यद्यपि प्रयोजनलक्षणायां प्रयोजनस्य लाक्षणिकप्रतीतिकार्यत्वात् मुख्यार्थबाध-संबन्धयोरिव [रेव] प्रथमं परिज्ञानं तथापि रूढ़िलक्षणायां....... ................. परिज्ञानस्य पूर्वं संभवात् लक्षणजातीयसंभवमात्रेण किमप्यत्र प्रयोजनं भविष्यतीति प्रतीतेर्बुद्धिस्थतया चोक्तं मुख्यार्थबाधत्रितयं ति [इति] न खल्वत्र वाचकवन्मु-ख्यार्थबाधादिना परार्थो ज्ञेय इति [1]सम्वेद्यते, किन्तु वाच्यवाचकभावाव्युत्पन्नः स्वयमेव मुख्यार्थस्यान्वयानुपपत्तौ अन्वययोग्यमर्थं लक्षयति, व्यञ्जनायास्तु ज्ञायमान प्रतीतितया निमित्तसापेक्षविरहात् कथं लक्षणाभावः सुहृद्भूता सा लक्षणा, तदनु-गमेन तस्या लक्षणायाः पश्चाद्व्याप्रियमाणे तया [व्याप्रियमाणतया] अवाचकवर्णाः ............मित्यादयः । स्वोपि हि प्रकरणादिसाचिव्येन तत्तदर्थप्रकाशतावगमात् । तृतीयो भागस्त्रिभागः प्रान्तं लक्षप्रवृत्तानां नर्तकीना, तेनावलोकनस्य तन्नतस्वदनु-कूलवानुद्भावात् [ ? ] आदिशब्दादधोमुखत्वादि भंगादि, एवमुक्तं सर्वमेव कारणार्थमुपसंहरति **इतीति** ।

अतिवर्ण अतिक्रान्तो विषयः अनप [ह्न] वनीयः अपह्नोतुमशक्यः, विषयान्तर-प्रतिपादनव्यग्रतया पूर्वमदर्षि [शि] तानियतसंबन्धान्युदाहरणानि दशयन्नाह **तत्रे ति** । नियतः संबन्धाः [न्धः] वाच्यव्यंग्ययोरेकपन्वि [?] विषयत्वात् । कस्य न वा हो यीत्यादौ तु वाच्यार्थं सखीविषयः व्यङ्ग्यार्थस्तु [2]ततिविषय [तत्तद्विषय]

१. Pt. text reads संबध्यते for संवेद्यते ।

२. " " reads तत्तत्प्रतिविषयः for तत्तद्विषयः ।

इत्युभयोर्भिन्नविषयतासंबन्धादनियतः, यद्वा प्रथमे तत्तद्वाच्यत्वात् तत्तद्व्यंग्यार्थस्य एकरूपेण प्रतीतेः सार्वत्रिकत्वात् सम्बन्धो नियतः।

कस्मणवहो [कस्सणवहो] इत्यादौ व्यङ्ग्यार्थस्य ष·······वेव [संभवेत्व] सत्यतयावगतिः। अन्येषान्तु लिख्यार्द्धेनैवेय [?] नियतः। एवमेव हि संबन्धस्यानियतत्वं सर्वथा संबन्धनियमत्वतोरे [?] व्यञ्जनेऽभिप्रसङ्गः [अतिप्रसङ्गः] स्यात्।

विपरीत वते [रते] लक्ष्मीर्ब्रह्माणं दृष्टवा नाभिकमलस्थम्।
हरेर्दक्षिणनयनं रसाकुला झटिति स्थगयति॥
अत्र वाच्येन प्रथमव्यङ्ग्यस्य सम्बन्धः।

**अयमर्थः**। "सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिश्रुतिवाक्येन ब्रह्मणो निर्धर्मकत्वात् [१]सत्यादिपदेन खण्डशो धर्मप्रतिपत्तिविरहात् अविभक्त एव इत्यर्थः। प्रकाश्यते तन्वीत्यावाक्यान्तरेणापाति [?]।

**येप्याहुः** वेदान्ति इत्यर्थः। अरित्यापादपतिते [ ? ] व्यवहारदशामापन्नैः पदपदार्थककल्पना कर्तब्येव। अन्यथा पदपदार्थव्याकोपे व्युत्पन्नान्यन्वयो [···व्युत्पन्नयोः] विशेषः स्यात्। उक्तोदाहरणं निःशेषच्युतीति [तेति]। व्यंग्य एव भट्टपक्षोक्तयुक्त्येति विशेषः। तेषां हि व्यवहारे भट्टनयः। किञ्चैषां मते सदानन्दस्वरूपं ब्रह्मणोभिधाया विशेषः [विषयः]। शं [सं] केता गोचरत्वात् नापि (ल) क्षणायाः सामग्रीविरहात् न हि तात्पर्यस्य तस्य [२]पदार्थस्य संसर्गमात्रनैयत्यात्। नाप्यनुमानस्य व्याप्तिग्रहणाभावात्। श्रुतेः पृथक् प्रामाण्याच्च इत्यन्यवृत्यादि भाषाव्यपदेश्यं तत्प्रकाशकं यद्व्यापारान्तरमङ्गीकृतं वेदान्तनिस्त्रदेव [वेदान्तिभिस्तदेव] व्यंञ्जनादिव्यपदेश्यमस्माकं काव्योपनिषदनामिति [काव्योपनिबद्धानामिति] निर्विवादम्।

अधुना ध्वनेरनुमानान्तर्भावं वाच्यादित्यादिना व्यापकविरुद्धोपल [ब्ध]··· रित्यन्तेन ग्रन्थेन शङ्कते **भावदिति** [भ्रमेति]। व्यञ्जनावादिभिर्भवद्भिरपि एतदभ्युपगन्तव्यमिति भावः। जाद्यति भवनियतसंबन्धाभावहेतो [?] व्यप्यित्वे न ति यः [?] खलु ब्यापकस्य व्याप्यायोग्यस्याप्यस्य [?] च व्यापकत्वयोगः तदुभयव्यवच्छेद समाव्याप्ति [···रूपाव्याप्ति] समन्वेन [संबन्धेन] नियतः। प्रकृतो यो

१. Pt. text reads सत्यादिभेदेन for सत्यादिपदेन।
२. " " reads अपदार्थस्य सर्गमात्रनैयत्यात् for पदार्थस्य संसर्गमात्रनैयत्यात्।

धर्मो आश्रयस्तन्वि [द्वि] शिष्टेन त्रिरुपात पक्षसल्लस [सत्वस] पक्षसत्वविलक्षणव्या [या] वृत्तिनामकरूपत्रयोपपन्वान्दिंगात् [तात्लिङ्गात्] व्याप्यात् लिंगव्यापके ज्ञाने अनुमानमित्युच्यते, [१]तत्क्रमः तत्स्वरूपः पर्यवस्यति वाच्यात् व्यंग्याच्चावगम इत्यर्थः।

हेतुमाह **तथा हीति**।

भ्रम धार्मिक विश्वस्तः स श्वाद्य मारितस्तेन।

**गोदावरी** नदी कच्छकुञ्जवासिना तृप्तासिहेन [दृप्तसिंहेन]।

इह हितः [वञ्जुलल] ········ [तागृहे सङ्केति] तायाः केनापि निमित्तेन धार्मिक सतद्वेकुश [?] भ्रमणं [२]स्वमनारेथ विप्रकृतं मन्यमानाया वचनम्, अत्र यौ वाच्यव्यंग्यार्थौ तयोर्धूमाग्न्योरिव [३]साध्यमानभावेनावस्थितिः तदिह गोदावरी-तीरवने कुञ्जे आश्रयभूते [४]भीरोरभ्रमणरूपो साध्यः, तत्र वाच्यरूपे [पो] तृप्तसिंह-सद्भावः साधनम्। इह च लिङ्गस्य पक्षसत्वं निबद्धमेव सपक्षसत्वविपक्षव्यावृत्ते अनिबद्ध अपि सामर्थ्यादवसेये इत्यतो नानुमेयभावो व्यंग्य इति भावः।

एतदेवाह **अत्रेति**। यः खलु भिरुः [भीरुः] शुचोऽपि [शुनोऽपि] सद्भावस्थाने भ्रमितुमशक्तः स कथं सिंहोपल [ब्ध]········स्थाने भ्रमिष्यतीत्यर्थः। यमुद्भूरु-भ्रमणमिति यद्भीरुभ्रमणमिति]।

**अयमर्थः**। धार्मिकस्य भ्रमणं भयकारणनिवृत्युपलब्धिपूर्वकं भीरुभ्रमणत्वात्। संप्रतिपन्ववदित्यमा [संप्रति पन्नवदित्यनुमाने] यद्व्यापकं भयकारणं वृत्युपलंधि [लब्धि] पूर्वकं [यद्भयकारण निवृत्युपलब्धिपूर्वकं] तस्य य विरुद्धं [यद्विरुद्धं] भयकारणानिवृत्युपलब्धिपूर्वकं [?] तस्योपलंधिः [तस्योपलब्धिः] प्रतीतिः। सा च प्रकृतो संहोपलंधिः [प्रकृते सिंहोपलब्धिः]। तथाचात्रधार्मिकस्याभ्रमणमनुमितमिति भावः। एवं **ध्वनिकारोदा कृ** [हृ] तैतद्व्यङ्ग्योदाहरणरीत्या सर्वत्रैव विवादाध्या-सितस्य व्यङ्ग्यभीचारी [व्यभिचारी]नास्य होतोर्हेतुत्वमिति[?]भावः। **श्रुत[शुन] इत्यादि**। यः खलु [शुनः]···········स्पर्शशङ्कया शुनो बिभेति स सिंहसद्भावस्थानं प्रत्युपमृगयादि कुतु [त] हलितया **गच्छन्ती** [गच्छतीति] दर्शनाद्विरुद्धः भ्रमणरूप-साध्यविरुद्धसाधनात्। दूषणान्तरमाह वचनस्येत्यादौ आङ्गुल्यादीनामिति [पुंश्च-ल्यादीनामिति] शेषः। अप्रतिबन्धात् प्रतिनियतो निश्चितः असिद्धः सन्दिग्धासिद्धः

१. Pt. text reads तटस्थरूपः for तत्क्रमः।
२. " " " स्नमनोविप्रकृतं for स्वमनोरथविप्रकृतम्।
३. " " " साध्यसाधन·······for साध्यमान
४. " " " भीरुभ्रमणरूपः for भीरोरभ्रमणरूपः

सिद्धोवा । उपसंहरति । [1]**तदेति** । गमकतया कामुकसमीपगमनबोधकतया । **व्यक्तिवादिनेति** । व्यञ्जनव्यापारस्थापनार्थमुद्युतेले [ने] त्यर्थः । न प्रमाणप्रतिपन्नत्वं सन्दिग्धासिद्धादसिद्धत्वात् ।

एवं व्यञ्जनव्यापारसामग्र्या नानुमानसामग्रीत्वमिति योऽर्थान्तराभिव्यक्तौ वः सामग्रीष्ठा निबन्धन [?] सैवार्थमिति पक्षे नो गमकत्वेन सस्मतेति [सम्मतेति] **महिमभट्टोक्तमनुमानत्वं** निरस्तमिति भावः ।

नन्वेवमनियतप्रतिबन्धमूलभाक् एवं व्यङ्ग्य व्यं [व्यङ्ग्याद्व्य] ञ्जन भावः स्यादिति चेत् एवमेवेत्याह एवंविधोदिति [एवंविधादिति] उपपद्य [त्य] नपेक्षत्वेऽपि व्याप्त्यादिप्रतिबन्धनाभावेऽपीति, न चैवमभिप्रसङ्गः [मतिप्रसङ्गः] । प्रतीतेरन्यथोपपत्तावेव व्यक्ति [कल्प]·· ·····ना स्यादिति काव्यपुरुषावतारस्य [3]निखिलशास्त्रतत्ववेदिनः **श्रीमदानन्दवर्धमानाचार्यस्य व्यञ्जनव्यापारस्थापनमिति सर्वमवदातम्** ।

इह [इति] महापात्रश्रीविश्वनाथकविराजकृतौ । काव्यप्रकाशदर्पणे
पञ्चम उल्लासः ।

१. Pt. text reads तथेति for तदेति ।

२. Transcript omits **इदमेव युक्तिजालमुदाहरणान्तरे दर्शनं द्रढयति ।**

३. Pt. text omits तत्व ।

# अथ षष्ठ उल्लास:*

इह यद्यपि [1]अलङ्कार्यभूतस्य शब्दार्थानुचित्रयोरलङ्कारवत्त्वाद्विशेषलक्षणं पश्चादुल्लासद्वयेन निरूपयितुमात्मनोऽभिमत इति ध्वनिगुणीभूतव्यङ्ग्यरूप काव्य-विशेषप्रतिपादनानन्तरं तदुल्लासितं तथापि प्राचीनास्वरोधेन [प्राचीनानुरोधेन] काव्यविशेषत्वेन लक्षितयोस्तयो: किञ्चिद्विशेषमाश्रित्य उल्लासान्तरमानते [००मारभते] । **शब्देति** । चित्रशब्द स्पर्शक्षर्थयो: [चित्रं शब्दार्थयो:] प्रत्यकं [प्रत्येकं] सम्बन्ह्व: [संबन्ध:] । उदाहृतं शब्चित्रं [शब्दचित्रं] वांच्यचित्रमित्यादिना प्रतिपादितं **गुणेति** । शब्दचित्रे प्रधाने [अर्थचित्रस्य] अर्थचित्रे प्रधाने शब्दचित्रस्य गुणत्वमिति द्वयोरेकत्र सद्भावेऽपि प्रधानेन व्यपदेशा भवन्तीति उक्तन्यायेन यस्य [अस्य] प्राधान्येन व्यपदेश इत्यर्थ: । अविचित्रत्वमित्यत्र [अर्थचित्रमित्यत्र] संवयेति [?] शेष: । तत्रैव तथाचोक्तमित्यादिना इष्टं द्वयन्नेनेन्यन्तेन [द्वयं तु न इत्यन्तेन] प्रामाणिकसंगतिं दर्शयति । उक्तं **प्राचीनै**:—रूपकादिरर्थाश्रयोऽलङ्कारो विभावादि-स्वरूपारूपार्थोपस्कारतया मुख्यस्य [2]रसादेरुत्कर्षत्वान् तस्य काव्यस्य बहुधा बहु-प्रकार [?] । शब्दालङ्काराणां तु [3]विभावाद्युपगमानयनमात्रप्रयोजकशब्दधर्मतया बहिरङ्गत्वान्नमुख्यालङ्कारमिति केचित् । अलङ्कारघटनया उपयोगस्य व्यतिरेकेण दृष्टान्तमाह नकारान्नमिति [न कान्तमिति] काव्यस्य शब्दविशेषरूपत्वादर्थस्य तद्व्यवच्छेदकमात्रेणामुख्यत्वात् अर्थाश्रितानामलङ्काराणां बहिरङ्गतेत्यर्थ: । सुपांतिताङामिति [सुपांतिङामिति] सुवर्णानां [सुबन्तानां] तिङन्तानां पदानां व्युत्पत्तिविशेषणमाधुर्याद्यनुगुणवर्णविशेषार्थकत्वेनोत्पत्तिं वाचां वा श्रुत्यानीतदेतत-स्वपतिङव्युत्पत्तियोगित्व [सुप्तिङ् व्युत्पत्तियोगित्वं] सौशाद्वासुशब्दतां [सौशब्द्यं सुशब्दताम्] अर्थस्य व्युपत्ति: वंमाननादिना [वर्तमानादिना] योजनं नेदृशी शब्दका-

---

*Transcript maintains that the manuscript text of this ullasa is utterly corrupt and illegible.

Ed. It may be illegible but not corrupt to a Larger extent.

१. Pt. text reads अलङ्कार्यतया for अलङ्कार्यभूतस्य ।

२. Pt. text reads रसादेरेव for रसादे: ।

३. ,, omits ·······गम····

त्पत्तिप्राया [?] अतश्च [१]शब्देनैवोपाधिभूतेन काव्यत्वमिति शब्दस्यैव मुख्यत्वमिति शब्दालङ्काराणामेव प्राधान्य**मित्यपरे** ।

**शब्देति** । अभिधेयोऽर्थः । द्वयं शब्दार्थालंकारयुगलम् । नोऽस्माकं तु पुनरिष्टमिति मतम् । द्वयोरप्यर्थोपस्कारत्वा वा [त्] [२]मुख्यरसादिपरिपोषकत्वेन परस्परतो विशिष्यमानत्वादिति भावः ।

प्रथममित्यादौ यद्यपि क्रमप्रधाना त् स्वभावोक्तिरीत्या [?] लकार दृष्टोयमाणश्च [दृष्टोपमाश्च ?] सन्ति तथापि अन्वयानुसन्धिमन्तरेणाप्यनुप्रासमहिम्ना [अन्वयानुपपत्तिमन्तरेणाप्यनुप्रासमहिम्ना [?] कश्चित् प्रकर्षो हृदि निधीयत इत्यनुप्रासस्य प्राधान्यात् शब्दाचित्रं [शब्दचित्रं] भावधैर्य विध्याताय [विधाताय] स्वास्यविध्याताय वा [स्वास्थ्यविघाताय वा ?] नीचानसाः [नम्रा] हीनसत्वाश्च अतीकं समा चं [?] अप्रियं च कानतां [कालतां] [३]श्यामलतां दारुणतां च । [४]कुटिलतां कुञ्चितां अनृजुतां च । अत्रार्थ [नु] प्राससद्भावेऽपि अर्थालङ्कारस्यैव [५]उद्भटप्रतीतिरिरिति तत्प्रधानता ।

[६]ननु स्वादरूपमेव [आस्वादरूपमेव] वाक्यं [काव्यम्] । आस्वादश्च व्यंग्य एव । अनयोश्च [७]प्रथममित्यादिपक्षयो र्व्यंग्यत्वात् आस्वादरहिततया कथं काव्यत्वमित्याह **यद्यपीति** । अन्ततो महाकाव्यार्थपवि [?] [८]ज्ञानपर्यन्ते धिभावादिरूपतया एवं विधस्य समग्रैकवाच्यवर्णितस्य चन्द्रादेरित्यर्थः । रसपर्यवसानं प्रवणत्वं स्फुटस्य रसस्यानुपलंभात् महाकाव्यपर्यालोचनाहेतुकं व्यंग्यरहितमेतत् प्रथमं इत्यादिकाव्यद्वयमुक्तं प्राचीनानुबो [रो] धादिति भावः ।

तथाहि । यद्येवमादौ काव्येषूक्तरीत्या रसपर्यवसानमस्ति तदा आस्वादस्य

---

१. Pt. text reads शब्देनेनेषिधि भूतेन [?] for शब्देनैवोपाधिभूतेन ।
२. " " omits मुख्य ।
३. " " omits श्यामलताम् ।
४. ,, ,, reads कुञ्चितां ।
५. ,, ,, ,, ० प्रतीतिरिष्यत इति for प्रतीतिरिति ।
६. ,, ,, ,, न तु for ननु ।
७. ,, ,, ,, द्वयमित्यादि for प्रथममित्यादि ।
८. ,, ,, reads व्युत्पत्तेः for ज्ञानपर्यन्ते ।

प्रकर्षाप्रकर्षाभावो ध्वनिगुणीभूतयोरेवानुपातः [प्रासः] सर्वथास्वादाभावेऽनु [?] काव्याभासतैवेत्युक्तमेव शब्दचित्रमित्यादि कारिकाव्याख्याने । विशेषतश्च अस्मत् [1]**साहित्यदर्पणेऽलंकारनिर्णयेऽन्तिमोल्लासद्वये** व्यवस्थापिते [2]निर्णेश्य [ष्य] न्ते

इति महापात्रश्रीविश्वनाथकविराजकृतौ काव्यप्रकाशदर्पणे
षष्ठ उल्लासः ।

---

१: ,, ,, omits अस्मत्......
२. ,, ,, ,, निर्णेष्यन्ते ।

## अथ सप्तम उल्लासः

उल्लासे सङ्गतिमाह वृत्तिकृत् **काव्यस्वरूपमिति**। **दोषाणां** गुणालङ्कारयोः प्रष्टामं [दुष्टानां or निर्दिष्टानां] हेयत्वेन, काव्यलक्षणकारिकायां निर्दिष्टानाम् ।

**मुख्यार्थेति**। शब्दार्थशरीरस्य काव्यस्यानुभूततया मुख्य उद्देश्योऽर्थो रसः। इति [हतिः] दोषापकर्षशब्दाः [रसापकर्षशब्दा] करणव्युत्पत्तिसिद्धाः।

सामान्यलक्षणयुक्ता [मुक्त्वा] विशेषलक्षणार्थं विभागमाह **रसश्चेति**। तदाश्रयान्ते [तदाश्रयात्] तस्य रसस्याश्रयणात् । तदाश्रयत्वञ्चात्र तदुपायतया [तदुपचारतया] वाच्यः। उपचारान्मुख्य इत्यर्थः। उभयं रसवाच्ये, **तेषु** शब्दादिष्वपि। शब्दात् [अर्थात्] रसवाच्ययोरपि स दोषः । शब्देत्यनेन पदवाक्ययोः संग्रहः। **आद्य**शब्देन पदांशः यस्मात् प्रथमं रसो मुख्यः तस्मात् तत्र रसे व्यभिचारि भावस्य सु [स्व] शब्दवाच्यतादयो दोषाः मूर्षतादय इव [ ?? ] काव्यानुभूतस्य रसस्य साक्षादपकर्षकाः। वाच्यदोषाश्च [अ] पुष्टार्थत्वादयः कारणत्वादिवत् [काणत्वादिवत्] तथा शब्दादिदोषाश्च श्रुतिकट्वादयः।

एवञ्च रसे, वाच्ये, पदे, वाक्ये, पदांशेषता [इति] भवन्तः [अनन्तः] प्रकारा दोषा इति विभागः। **आद्यग्रहणादिति**। वचनाद्दोषस्य वाच्यसमस्त [वाक्यसमस्त] पदनिष्ठत्वेन शब्दपदोपग्राह्यत्वेऽपि वचनायाः [रचनायाः] पदसंयोग रूपत्वे पदयोर्व्यासिज्यवृत्तित्वाभिप्रायेण पदांशवृत्तित्वादाप्त [दाद्य] पदग्राह्यत्वं अन्यकृतोऽभिमतम् [वृत्तिकृतोऽभिमतम् or ग्रन्थकृतोऽभिमतम्] एवञ्च यद्यपि वर्तमानपदेनापि नानाविधपदांशानामुपग्रहः [ ? ] तथापि विप्रतिपत्तिनिरासार्थं वचनायाः [रचनायाः] पुनर्वचनं यद्यपि विभागे सदोषाणामेव प्रथमं निर्देशस्तथापि पदस्य प्रथमं बुद्ध्यारोहात् तदंशानांचात्यल्पविषयत्वात् पददोषानावोह [नादावाह] **दुष्टमिति**।

## पददोषाः

श्रुतिकटु पदं दुष्टं भवेदिति संबन्धः। परुषवर्णत्वमेव विशदयति **कष्टं** कष्टोच्चारणीयम् । अपाङ्गस्य भङ्ग्या तरङ्गितैः । संस्क्रियतेऽनयेति संस्कृत व्याकरणलक्षणं।

संस्कृतप्राकृतादिविषयम्। श्यामोदरं चापाण्डरप्रान्तं च। अप्रातृत [अप्राकृत] कुचयुगदर्शनेन कुञ्जरकुलं कुम्भातयाभ्यर्थतया [कुम्भाभयाभ्यर्थतया] तव वशीभूतं वर्ततामित्याशयः।

ननु अनुनाथत इति पदस्य पदान्तरसव्यपेक्षस्यैव दुष्टत्वात् कथं न वाक्यदोष इति न। इह ध्वनिगुणीभूतव्यंग्य दोषगुणालङ्काराणां शब्दानुगतत्वस्यान्वयव्यतिरेकार्थविधायित्वेऽपि व्यवस्थापितत्वात् यदास्यैव परिवृत्यसहत्वमिति भावः। तथा प्रत्ययांशं व्यवस्थाप्य प्रकृत्यंशपरित्यागेऽपीत्यस्य पददोषताभ्युपगमः।

एवं **दैवत** इत्यादिष्वपि अप्रयुक्तत्वादौ बोद्धव्यम्।

**अत्र हन्तीति गमनार्थमित्यानन्तरं** [मित्यर्थान्तरे] पठितमपि तत्रासमर्थमिति शेषः [दोषः]।

नन्वत्र हन्तप्रकृतेरेव परिवृत्यसहत्वादसमर्थत्वस्य पदांशनिष्ठत्वमेव तत्कथं पदनिष्ठत्वमिति चेदुच्यते असमर्थस्य पृथक् पदनिष्ठत्वस्यादर्शनात्। प्रकृतिप्रत्ययौ स्वस्वरित्यनादृत्य [ ? ] समुदितं पदं वाचकमिति मतमवलम्ब्य हन्तीत्यर्थपदनिष्ठत्वमेवोक्तम्। अत एवास्यैत्या [एवास्यैतदर्थक] बोधकान्तिमसूत्रे "पदस्यांशेऽपि केचन" इत्युक्त [त्वात्] पदांशेनास्य दोषस्योदाहरणं दर्शितम्।

अप्रयुक्तत्वमेकार्थं [?] शब्दविषयम्। इदमसमर्थन्त्वनेकार्थशब्दविषयमिति भावः। शा कृतः र्ज्ञो ततः [??] इह शब्दानां विरलप्रयोगे निहतार्थत्वमसमर्थत्वं च सर्वथा प्रयोगाभाव इति भेदः। अत एवाह-अप्रयुक्तनिहतार्थौ श्लेषादावदुष्टाविति। अत एव च्युतसंस्कृतसमर्थनिरर्थकत्वादीनि [नां] वाच्यदोषत्वेनागणलं [नम्] पशुपदं तथाविधसमराध्वरेषु अप्रयुक्तम् अत्र पशुत्वादेवारोपितत्वान्निहतार्थत्वादेर्भेदः।

**अवन्ध्येति**। अत्र यत् ग्रन्थकृतोक्तं जन्तुपदमदातर्यर्थे विवक्षितमिति तेदनुक्तोपलिन्मः [तदनुक्तोपनिबद्धः ?] तथाहि 'जन जनने' धातोः व्यत्याद्रितस्य [?] जंतुशब्दस्य कृतजन्मग्रहणमात्रैः पौरुषहीन एव वाच्यः। अवन्ध्येत्यादि प्रथमार्द्धस्य हि द्वितीयार्द्धवैधर्म्येण समर्थकं, अवन्ध्यकोपत्वमेधवहि [मेव हि ?] वैधर्म्येणामर्षशून्यत्वं आपन्निवृत्वमेव चासमनन्तरोक्तप्रकारं जन्तुत्वम्। मित्रहेतुक आदरभावः, शत्रुहेतुकोभयाभावश्च द्वयमपि वैधर्म्येणावश्यमेव। ततश्च यः कश्चिदमर्षशून्यः स नतिकोपो [नतशिरो] भवति। तेन जातहार्देन उत्पन्नस्नेहेन जनस्यादरो न भवति, तथाभूतेनैव च विद्विषादरौ भयं न भवतीत्यर्थः।

एवमेवात्र पक्षे वाचकत्वदोषाभावमभिप्रेत्य पुनरन्यदाहवति [पुनरन्यमुदाहरति] **हाधिर्गति**। कुशले कुशलोत्पादने, विधुरो विक्रूरः, विमुख इति यावत्, सूर्योदयादस्त पर्यन्तस्तद्गत्यवच्छिन्नः कालविशेष एव दिवसशब्दवाच्यः, न तदविनाभूतं प्रकाशमयत्वमपि, असमर्थत्वे स्वोदेयो समक्षस्य [?] वाचकः। दिनादयस्तु प्रकाशमयत्वेन तथेति भेदः,। इह दिवशोतितादिशब्दानां [?] स्वतः परिवृत्तिसहत्वेऽपि मुख्यनर [?] धर्मिरूपार्थप्रतिपादिकांशस्य तथाविधत्वाभावात् पदगतत्वयुक्तम्। अत एवालङ्कारसर्वस्वकृतापि "[१]सुनयने नयने निप्रही [?] त्यादौ विभक्तयर्थस्यापौनरुक्तचमपि लाटानुप्रासत्वमुक्तम्।

**यच्चेति**। चकारात्तदवश्यमिति भावः। उदरुणन्यायकपातिनय विशेषः [ऊर्ध्वचरणन्यासकाभिनयविशेष] स्वरूपो दण्डो पादः विदधदिति विशिष्टधारणार्थेत्र युक्तोऽवधातुः करणार्थ एव युक्त इति तत्रावाचकः। उपसर्गेण "हि धात्वर्थो बलादन्यत्र नीयत" इति।

साधनशब्दो हस्त्यश्वादिसाधनार्थः पुंध्वजस्य।

वायुशब्दः पवनमात्रार्थोऽपानपवनविशेषस्य। विनाशशब्दश्चादर्शनार्थो मरणस्मरणात्। क्रमेण वीडादिव्यञ्जकाः।

**वन्ध्यामिति**। द्वितीयार्थेन सप्तम्यर्थेन च संभवात् सन्देहः।

**केवले** न तु लोकेऽपि, निहतार्थ तेऽर्थद्वयमपि [निहतार्थेतु अर्थद्वयमपि] लौकिकम्। इहत्वेकोऽर्थः शास्त्रीय एव, द्वितीयस्तु सन्धपि [सत्यपि] लौकिक इत्युभयोर्भेदः।

**अत्रेति**। योगशास्त्र एव **न तु** लोके तथाहि पातञ्जलसूत्रं "[२]क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर" इति। क्लेशा अविद्या, [तदस्पृष्टगुणा] कर्मणि सुकृतदुष्कृतानि तत्फलं विपाकः तदर्थगुणा वासना आशयः ते समस्ति [?] वर्तमाना पुरुषेऽपदिश्यन्ते इति। किञ्चेदं वक्तृबोद्धव्ययोः शास्त्रानभिज्ञत्वे पुनः श्लेषादि बिना नादोष इति वक्ष्यते। ततश्चाप्रयुक्तत्वार्थ [अप्रतीतत्वार्थ] चेत्यर्थः।

---

१. द्र० अलङ्कार सर्वस्वम्

२. द्र० पातञ्जलयोगसूत्र

रूढ़िप्रयोजनाभावादाकर्षणेन प्राप्यो लक्ष्यार्थोऽत्रेति नेयार्थः **अत्रेत्यादि** पद्यार्थमपि पदं [दुष्टम्] समासान्तत्वात् ।

**मूर्ध्नामिति** । उद्वृत्तमिति [उद्धृत्तमतिगाढ] कृत्तं कर्तनसंसक्तं निरन्तरमुपनतो जातो जयो यत्र जगति । व्यतिकरः संपर्कः । तस्य पिशुलः [पिशुनः] सूचकः । मिथ्यामहिमत्वमिति बहुव्रीहावस्य [न्य] पदार्थस्य प्राधान्यात् । समासान्तः प्रविष्टस्य मिथ्यामहिमत्वस्यांशस्य विधयस्य प्राधान्येनानिर्देशादविमृष्टविधेयांशो दोषः । इह हि वक्तुर्दशमुखस्यायमाशयः—पुरा मम मूर्ध्नां यो महिमा स्थितः स इदानीं मिथ्याऽभूदिति । एवञ्च विधेयत्वेन विवक्षितस्य महिम्नो मिथ्यात्वस्य समासे गुणीभावादनुवाद्यत्वप्रत्ययः । तेन च पूर्ववो हि पि [ ? ] महिम्नो मिथ्यात्वस्यावभासनं मूर्ध्नामपकर्ष एव प्रतीयते ।

ननु कविबिवक्षितोत्कर्षः एवं चोपरितनोदाहरणेष्वपि बोद्धव्यं बिषयव्याप्तये समासान्तरेषूदाहरति आसामित्यादि [स्त्रस्तामित्यादि] **न्यासो** निक्षेपः, स्थानविदा स्थानौचित्याभिज्ञे न द्वितीयमौर्वीमिवेत्यत्र तत्पुरुषसमासे उत्तरपदस्यैव.................... । .............निर्जन्म इह जन्मनोऽलक्ष्यत्वं विधेयम् । मन्दानलं बन्धनं [संदाननैकसदनं] विधेयमित्यनन्तरं तत्पुरुषसमासे पूर्वपदत्वेन नञो हाणाभावाद्दोष [प्रयोगाभावाद्दोष] इति ।

पूरणीविशे [?] यथा विधेयस्य नञः समासाप्रयो [गेन] प्राधान्यं प्रतीतं दर्शयति **यथेति** । अत्राप्यदृप्तनिशाचर इत्युक्ते गुणीभावः । यत्र तु नञोऽनुबाधस्तत्रैव गुणीभावो युक्त इत्याह **न हीत्यादि** । आत्मगोपनादिविहितमित्यर्थः । गलग्रहशब्दः कश्चाश्लेषे [अश्लीले] प्रयुक्तः । कश्य [ण्ठ] रोगविशेषप्रतीतिकृत् ।

**अन्त इति** । भवानीशब्दो भवस्य पत्नी, न दावनप्रत्ययान्तः [न भवान्याः पत्यन्तरे] विरुद्धां धियमिति । अम्बिका माता तस्याः कामुक इति रूपा ।

## वाक्यदोषाः पदांशदोषाश्च

संप्रति वाक्यदोषान् पददोषांश्चाह **अपास्येति** । संस्कारः संस्कृतिः । एतेषामनन्तरोक्ताः [एते समनन्तरोक्ताः] श्रुतिकट्वादयः । अतसंस्कृतत्वादि [च्युतसंस्कृतेत्यादि] दोषत्रयं हि वाक्यगतत्वेन लक्ष्येन संभवत्येव तर्हि को नाम मूढः पुनपुनरभिदध्यात् ।

